स्पर्धायां शब्दे च आत्मनेपदिनः आङुपसर्गपूर्वकात् धातोः लुङ् । तथा च विप्र एव एतत्पत्रनयने समर्थः । इदं हि पत्रं सकलशास्त्रार्थसाररूपम् । अतः सकलशास्त्राब्धि-मथनकुशलमन्दराचलसदृशबुद्धिमत्तया विख्यातो हि विप्रः प्रकृते समर्थः । अत्र सूक्ष्मायाः प्रेक्षायाः स्थूलेन शैलेन कथमुपमा दीयत इति चेत् अचलत्वेनेति मन्तव्यम् । तद्बुद्धिर्न लौकिकानामिव चञ्चला । अपि तु शास्त्रसागर एव मग्नेति । तथापि न निर्व्यापारा जडा । मथनसाधनीभूतेति स्वस्थान एवावर्तनशीलेति बोध्यम् । एवं श्रीकृष्णश्च ब्रह्मण्यदेव इति हि प्रसिद्धः । 'नमो ब्रह्मण्यदेवाय' इत्युक्तेः । तस्मात् अयं पत्रवाहकः श्रीकृष्णप्रिय इति । ततश्च तद्द्वारा प्रेषितं च कृष्णस्य हृद्यं भवतीति भावः । विप्रस्य नाम तु कवेर्नोह्यातीतम् । अथापि ''अजया प्रेषितं पत्रं द्विजः कश्चिदुपाहरत्'' इत्यभियुक्तोक्तिमनुसर्तुं कश्चिद्विप्रमित्येव निर्दिशत्ययं कविः । अत्र रूपकालङ्कारः ॥

ಆದರೆ, ಪತ್ರ ಬರೆದ ಮಾತ್ರಕ್ಕೆ ಸಮಸ್ಯೆ ಬಗೆಹರಿಯಲಿಲ್ಲ. ಅದು ಕೃಷ್ಣನಿಗೆ ತಲುಪಬೇಕು. ರುಚಿಸಬೇಕು. ಅದಕ್ಕೆ, ಮನವರಿಕೆ ಮಾಡಿಕೊಡುವ ಸರಿಯಾದ ಮಧ್ಯವರ್ತಿ ಬೇಕು. ಅವನ ಮೇಲೆ ಶ್ರೀ ಕೃಷ್ಣನಿಗೆ ಆದರ ಅಭಿಮಾನ ಇರಬೇಕು. ಅವನನ್ನು ಕಂಡೊಡನೆ ಕೃಷ್ಣ ಸಂತಸ ಪಡುವಂತಾಗಬೇಕು. ಯಾರು ಅಂಥವನು? ಈ ನನ್ನ ಕೆಲಸಕ್ಕೆ ತಕ್ಕವನು? ಹೀಗೆ ಆಲೋಚಿಸುತ್ತ ರುಕ್ಮಿಣಿಯು ಓರ್ವ ಶ್ರೇಷ್ಠ ವಿಪ್ರನನ್ನು ಆದರದಿಂದ ಕರೆದಿದ್ದಳಂತೆ. ಅವಳಿಗೆ ಗೊತ್ತಿತ್ತು :- 'ಶ್ರೀ ಕೃಷ್ಣ ಬ್ರಹ್ಮಣ್ಯ ದೇವ, ಬ್ರಾಹ್ಮಣ-ವತ್ಸಲ' ಎಂದು. ಆದ್ದರಿಂದ ನಮ್ಮ ಸಕಲ ಕರ್ಮಗಳನ್ನು ವಿಪ್ರಮೂಲಕ ಅರ್ಪಿಸಿದರೆ ಭಗವಂತ ಪ್ರಸನ್ನನಾಗುವುದು ನಿಶ್ಚಿತವು. ಇದನ್ನು ಜಗಕೆಲ್ಲ ತಿಳಿಯಪಡಿಸುವಂತೆ ರುಕ್ಮಿಣಿಯು ಆ ಬ್ರಾಹ್ಮಣನನ್ನು ಕರೆದಿದ್ದಳು. ಅವನು ಕೇವಲ ಹೆಸರಿನಿಂದ ಬ್ರಾಹ್ಮಣನಲ್ಲ. ಅಂಥವರಿಗೆ ಭಗವಂತ ಮೆಚ್ಚುವುದೂ ಇಲ್ಲ. ಕಿಂತು ವೇದಶಾಸ್ತ್ರಮರ್ಮಜ್ಞನಾಗಿ ಬ್ರಾಹ್ಮಣಿಕೆಯನ್ನು ಸಾರ್ಥಕಗೊಳಿಸಿದವನು. ವೇದ-ಶಾಸ್ತ್ರಎಂಬ ಪಾಲ್ಗಡಲ ಕಡೆವಲ್ಲಿ ಅವನ ಅಚಲವಾದ ಬುದ್ಧಿ ಮಂದರಾಚಲವೆಂದೇ ಹೆಸರುವಾಸಿ.

As if she was trying to make the world understand that the God would be pleased only when our actions/duties are performed through a Brahmin, she invited a Brahmin to deliver the letter to Lord Krishna. The way, in which churning the milk ocean using Mandara Mountain as churning rod produced the nectar, in the same way the Brahmin had gained knowledge by churning (Analysing) Shastras using wisdom, which brought him fame.

**सत्याहिंसाशममुखगुणानर्घ्यरत्नप्रभाभि-**
**र्दूरीभूताखिलजनमनोध्वान्तमुद्ध्वस्तदोषम्॥**
**भक्त्या येषां प्रभुरपि हरिः सूत्रसम्प्रोतनासः**
**धत्ते वृत्तिं वृष इव पुरोयायिनं तेषु सत्सु ॥ १४॥**

**सत्येति**। पूर्वेणान्वितमिदं पद्यम्। सत्यं प्राणिहितवचनम्। ''सत्यं भूतहितं प्रोक्तं'' इत्युक्तेः। अहिंसा क्रोधत्यागः। शमः भगवद्भक्तिः। 'शमो मन्निष्ठता बुद्धेः' इत्युक्तेः। एते मुखानि येषां ते गुणा एव अनर्घ्याणि मौल्यानर्हाणि। ''दण्डादिभ्यो यत्'' (५-१-६६) इति। रत्नानि तेषां प्रभाभिः। दूरीभूतः अखिलानां जनानां मनसां ध्वान्तः येन तम्। उद्ध्वस्ता दोषा येन तम्। पूर्वश्लोके कश्चिद्विप्रमित्य-नेनान्वयः। अथापरं विशेषणमाह **भक्त्या इति**। येषां सज्जनानां भक्त्या प्रभुरपि हरिः। सूत्रेण सम्प्रोता नासा यस्य तादृशः वृषः वृषभः इव वृत्तिं वर्तनं धत्ते करोति। यथा हि वृषभः नासायां सूत्रेण बद्धः सूत्रग्रहं पृष्ठतः अनुसरति तथा हरिरपि भक्तानां भक्त्या बद्धस्तत्पृष्ठतः अनुसरतीति भावः। यथोक्तं भगवता-

निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम्।
अनुव्रजाम्यहं नित्यं पूयेय स्वाङ्घ्रिरेणुभिः॥ (भागवते -११-१४-१६)

इति। अग्रतो गमनं विहायानुव्रजने कारणं चाभिहितं भगवत्पादैः यथा -

अनुगच्छति विष्णुस्तु स्वभक्तं तस्य शुद्धये।
तस्याङ्घ्रिरेणुभिर्वातनीतैरग्रेसरः शुचिः॥
अग्रतो गमने विष्णोः पादस्पृष्टं रजो भवेत्।
अतः स्वभक्तं पूयेयेत्यनुव्रजति केशवः॥ इति॥

तथा चैतादृशेषु सत्सु पुरतः यायी यस्तं अग्रेसरमिति यावत्। तादृशं विप्रमाह्वास्तेति पूर्वेणान्वयः। अत्र मुनिशब्दार्थः पूर्वश्लोकोक्तप्रेक्षाप्रथितयशोरूप-विशेषणेन, शान्तशब्दार्थः शमग्रहणेन, निर्वैरशब्दार्थः अहिंसाग्रहणेन, समदर्शन-

शब्दार्थः सत्यग्रहणेन निरूपित इति मन्तव्यम् ।

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥

इत्युक्तं समदर्शनं हि सत्ये प्राणिहितवचसि गुणे हि अन्तर्भूतम् । एवं निरपेक्ष-शब्दार्थ एव पुरोयायित्वेन व्यज्यत इति । एतेन एतादृशस्य विप्रस्य प्रेषणेन श्रीकृष्ण-स्तमनुव्रजन् स्वसमीपमायात्येवेति निश्चयो रुक्मिण्यपेक्षितः प्रतिपादितो भवति । एवं सत्सु पुरोयायीत्युक्त्याऽयं जीवोत्तमस्थानापन्न इति प्रतिपादितं भवति । तेन च गुरुवादिराजार्य एव तद्विप्र आसीदित्यैतिह्यमपि सङ्गृहीतमित्यलम् । अत्र गुणानर्घ्यरत्नेति रूपकम् । अन्त्ये च उपमा ॥

ಇದಲ್ಲದೆ, ಅವನು ಸತ್ಯ-ಶಾಂತಿ-ಅಹಿಂಸೆ ಮುಂತಾದ ಅಮೌಲ್ಯಗುಣವಂತ. ಆ ಗುಣರತ್ನಗಳ ಕಾಂತಿ ಬೀರಿ, ಜಗದ ಮಾನಸಿಕ ಅಂಧಕಾರವನ್ನೆಲ್ಲ ಕಳೆಸುವಾತ. ಒಂದೇ ಒಂದು ಕೆಟ್ಟ ದೋಷವೂ ಅವನಿಗಿಲ್ಲ. ಇದಲ್ಲದೆ, ಮೂಗುದಾರ ಬಿಗಿಸಿಕೊಂಡ ಎತ್ತು ಯಜಮಾನನ್ನು ಹಿಂಬಾಲಿಸುವಂತೆ, ಭಕುತಿಪಾಶಕ್ಕೆ ಬಿಗಿಸಿಕೊಂಡ ಶ್ರೀ ಹರಿಯು ಕೆಲವು ವಿಶೇಷ ಭಕ್ತಗಣಕ್ಕೆ ಸದಾ ಹಿಂಬಾಲಕನೆಂದು ಹೇಳುತ್ತಾರಷ್ಟೆ. ಅಂಥ ಭಕ್ತಗಣಕ್ಕೆ ಅವನು ಮುಂಚೂಣಿಯಂತೆ. ರುಕ್ಮಿಣಿಗೆ, ತನ್ನ ಸಂದೇಶ ತಲುಪಿಸಲು ಅವನೇ ತಕ್ಕ ವ್ಯಕ್ತಿಯೆಂದು ತೋರಿತಂತೆ.

The unblemished Brahmin had gem like qualities such as truth, non-violence, devotion etc., the radiance of which were driving away the darkness in the minds of all people. He was a leader of such group of people whose devotion made the lord to follow them like an ox having threaded nose.

**कश्चिन्मेघं हृदयदयितावेदनाय न्ययोजीत्**
**काचित्स्वोक्तैकवचनचणं पक्षिणं बुद्धिशून्यम् ॥**
**विप्रं तावत् प्रकृतिकुशलं कामिनीयं ययाचे**
**कामाक्रान्ता अपि न दधते दीनतामुत्तमा हि ॥ १५ ॥**

इदानीं, सन्देशवाहकत्वेन मेघादीनां ग्रहणमधमलक्षणम् । विप्रादिग्रहणं तूत्तम-लक्षणमिति प्रतिपादयन्, कालिदासोक्तार्थान्तरन्यासखण्डनपुरस्सरं स्वकवितातिशयं

प्रकटीकरोति ।। **कश्चिदिति** ।। कश्चित् यक्षः । हृदयदयितायै स्वप्रेयस्यै आवेदनं स्वयोगक्षेमज्ञापनं तदर्थम् । मेघं जडम् । न्ययोजीत् नियोजितवान् । निपूर्वकात् युजिर् योगे लुङ् । काचित् दमयन्ती नाम कन्या । स्वेन उक्तं यत् केवलं तस्य स्वोक्तैकस्य वचनेन कथनेन प्रसिद्धम् । बुद्धिशून्यं पक्षिणं न्ययोजीत् नियोजितवती । यद्यपि मेघादिजडं विहाय चेतनस्य पक्षिणः ग्रहणात् यक्षापेक्षयास्या बुद्धिकौशलं स्यात् । तथापि सन्देशवाहके अपेक्षितस्य बुद्धिचातुर्यस्य समयोचितवाक्चातुर्यस्य, यदि प्रियेण किञ्चित् पृच्छ्यते तदोत्तरदानसामर्थ्यस्य च पक्षिण्यभावात्तस्या अप्यकौशलमेव स्पष्टमिति भावः। अत्र द्वितीयपादे पाठभेदः दृश्यते ''काचिच्छाखामृगमपि खगं बुद्धिकार्यानभिज्ञम्'', ''काचिन्नीडे कलितवसतिं बुद्धिकार्यानभिज्ञम्'' इति । शाखामृगस्य सन्देशवाहकत्वेन कथा रामायणे प्रसिद्धा । दमयन्त्या च हंसद्वारा सन्देशः प्रेषितः । तस्य च खगस्य बुद्धिकार्यानभिज्ञत्वेऽपि नीडकलितवसतित्वं चिन्त्यं भवति । एवं हनुमत्सन्देशस्य दुष्टत्वं हनुमद्भक्तस्य कवेः न सम्यक् अभिप्रेतं स्यादित्ययमेव पाठ आद्रियते । एवं मेघदूतादीनामपकर्षं प्रतिपाद्य रुक्मिणीसन्देशोत्कर्षं व्यनक्ति । **विप्रमिति** । इयं कामिनी रुक्मिणी तावत् । रुक्मिण्याः कृष्णकामग्रस्तत्वं सूचयति कमिनीपदग्रहणेन । प्रकृत्या स्वभावतः कुशलं चतुरं विप्रं हृदयदयितावेदनाय ययाचे । टु याचृ याञ्चायां लिट् । विप्रस्य बुद्धिचातुर्यं हि प्रसिद्धमेव वर्तते । तथा सन्दर्भोचितवाक्चातुर्यं च नान्योपदेशायत्तं अपि तु औत्पत्तिकमिति भावः । मेघादीन् विहाय रुक्मिण्या कृतां विप्रयाञ्चां समर्थयते । **कामाक्रान्तेति** । कामाक्रान्ता अपि उत्तमा जना दीनतां नीचप्रार्थनां न दधते हि । तस्मात् मेघं वा पक्षिणं वा नीचं सा न ययाचे अपि तु क्षत्रियाणां सदैव उत्तमं विप्रं ययाचे । एतेन गौप्यमपि रक्षितं भवति। यदि रुक्मिणी कश्चिदन्यं प्रार्थयेत, तर्हि द्रष्टॄणां रुक्मिगूढचाराणां सन्देहावकाशः स्यात् । ब्राह्मणप्रार्थने तु न संशयावकाशः । नित्यं हि रुक्मिणी ब्राह्मणवन्दनादिनिरतेति सर्वे हि तूष्णीं पश्यन्ति इति । अत्र विप्रं तावत् विप्रमेव ययाच इति एवकारेण नीचं न ययाचे इत्यर्थावगमात् तत्समर्थनं च कामाक्रान्ता इत्यादिना विहितमित्यर्थान्तरन्यासः । कश्चिदित्यादिकं तु कामाक्रान्तानां दैन्यं भवतीति पक्षोपस्थापनार्थमेव । ततश्च तत्समर्थनापेक्षेति अर्थान्तरन्यासप्रवृत्तिः । स्वोक्तैकवचन-

चणं बुद्धिशून्यमिति विशेषणयोः साभिप्रायत्वेन परिकरः । न च वाच्यार्थोपपादकत्वाभावात् कथमिति शङ्क्यम् । प्रकृतार्थोपपादकत्वमात्रस्य तल्लक्षणे विवक्षितत्वात् । दमयन्तीकृतपक्षिनियोजनतिरस्कारस्य प्रकृतार्थत्वात् तदुपपादकत्वादनयोः । सन्दर्भोचितवाक्चातुर्याभावस्य अनुचितवचनस्य च तद्व्यङ्ग्यत्वादिति ।।

एतेन कालिदोसोक्त अर्थान्तरन्यासश्च तिरस्कृतो भवति । यथोक्तं तेन -

धूमज्योतिस्सलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ।। इति ।।

परन्तु कामार्ताऽपि रुक्मिणी अचेतने दैन्यं नाधत्तेति, कामार्तानां सर्वेषां दैन्यं प्रतिपादयन् कालिदासः रुक्मिणीस्वरूपानभिज्ञो अल्पज्ञ एवेति कवेराशयः । कामार्ता अधमा एव अचेतने दैन्यं धरन्तीत्येव वक्तव्यम् । न तु सर्वे । अथ कश्चित्कालिदासपुच्छावलम्बी यदाह -

धूमाकारस्त्वमिति हृदये नावजाने भवन्तं
दैवीं शक्तिं भवति फलदां भावयित्वार्थयेऽहम् ।।
तस्याः शक्तेः क्वचिदपि दृढा भावना सिद्धिहेतुः
तस्माद्युक्ता भुवि बहुमतिश्चेतनेऽचेतने वा ।। इति ।।

एवं, व्याख्यातं च यथा ‘‘ प्रोच्यते च आग्नेये --

अग्नौ क्रियावतां देवः रवौ देवो मनीषिणाम् ।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ।। इति ।।

तस्मात् भावनाया फलहेतुत्वात् भुव्यस्मिन् लोके चेतने मनुष्यादिप्राणिनि वा अचेतने शिलादारुलोष्ठादौ वा बहुमतिः पूज्यत्वभावना युक्ता समुचिता सर्वस्याप्यात्मचैतन्याधिष्ठितत्वादिति भावः । तथा च अचेतनोऽयं मेघ इति प्राकृतबुद्धिं विहाय

त्वमेव भगवानिति निश्चित्य त्वा सम्प्रार्थय इति मुख्योऽभिप्राय'' इति ॥

तदेतदज्ञानविजृम्भितम् । दैव्यां शक्त्यां फलदत्वभावनायां अफलदे मेघे तत्प्रार्थनाया अयुक्तत्वात् । शक्त्यधिष्ठानत्वेन मेघस्यापि प्रार्थ्यतेत्यप्ययुक्ता । त्वदुदाहृताग्नेयवचनानुरोधेन अग्नि-रवि-प्रतिमा-हृदयेष्वेव शक्त्यधिष्ठानत्वलाभेन मेघे तदलाभात् । धूमाकारे मेघे अग्नित्वानुपपत्तेः । यक्ष्याः क्रियावत्वाभावाच्च । मेघस्य प्रतिमात्वाभावाच्च । शक्त्यधिष्ठितत्वात् सर्वत्र पूज्यत्वसम्भावना चेत् कुतः मेघ एव सा प्रदर्श्या नान्यत्रेत्यस्योत्तरानुपपत्तेः । अपटुकरणेन मेघेन सन्देशानयननयनाद्यनुपपत्तेश्च । यच्चोक्तं ''त्वमेव भगवानिति निश्चित्ये'' ति, तत्तु अत्यन्तहेयाद्वैतवादवासनाविलसितं स्वोक्तशक्त्यधिष्ठानविचारविरुद्धं सर्वप्रमाणविरुद्धं च ।

तस्मान्माध्वीयकविताया एव सत्काव्यत्वमिति, ''काव्यालापांश्च वर्जयेदि''ति निषेधस्यैतादृशपरकाव्यपरत्वमिति निरूपितं भवत्येतत्पद्याशयपुच्छावलम्बेनेत्यलम् ॥

ಜಗದಲ್ಲಿ ತಮ್ಮ ತಮ್ಮ ಒಲವಿನ ಓಲೆ ಕಳುಹಲು ಒಬ್ಬೊಬ್ಬರು ಒಬ್ಬೊಬ್ಬರನ್ನು ಆದರಿಸಿದ್ದಾರೆ – ಬೇಡಿದ್ದಾರೆ. ಒಬ್ಬ ಯಕ್ಷ ಮೇಘದೂತನಿಗೆ ಶರಣಾದನೆಂದು ಕೇಳುತ್ತೇವೆ. ಹಾಗಾದರೆ ಅವನು ಮೇಘದಾಸ. (ಅವನಿಗೆ ಕಾಳಿದಾಸ ಎಂಬ ಹೆಸರು ಸರಿಯಾದೀತೆ?) ಇದಲ್ಲದೆ, ಜಡವಾದ ಮೋಡ ಸಂದೇಶವನ್ನು ತಲುಪಿಸುವುದಾದರೂ ಸಾಧ್ಯವೇ? ಆದ್ದರಿಂದಲೆ ಒಬ್ಬ ಅಬಲೆ (ದಮಯಂತಿ) ತನ್ನ ನಲ್ಲನಿಗೆ ಒಲವಿನೋಲೆ ಕಳುಹಲು ಹಂಸಪಕ್ಷಿಗೆ ಬೇಡಿದಳಂತೆ. ಇದು ಚೇತನವಾದ್ದರಿಂದ ಸಂದೇಶವನ್ನು ತಲುಪಿಸಬಹುದೋ, ಏನೋ? ಆದರೆ, ಅವಳು ಉರು ಹಾಕಿಸಿದ ವಿಷಯವನ್ನು ಮಾತ್ರ ಹೇಳಬಲ್ಲದು. ಮಧ್ಯೆ ಏನಾದರೂ ಪ್ರಶ್ನಿಸಿದರೆ ತಕ್ಕ ಉತ್ತರ ನೀಡುವ ಜಾಣ್ಮೆಯಿಲ್ಲ. ಪಕ್ಷಿಗೆ ಅಂಥ ಬುದ್ಧಿಯಿಲ್ಲ. ಆದ್ದರಿಂದ ದಮಯಂತೀಯ ಹಂಸ ಸಂದೇಶವೂ ಪರಿಪಕ್ವವಲ್ಲ. ಆದರೆ ಈ ರುಕ್ಮಿಣಿಯು, ಹುಟ್ಟಿನಿಂದಲೇ ಜಾಣನಾದ ವಿಪ್ರನನ್ನು ಬೇಡುತ್ತ ತನ್ನ ಜಾಣ್ಮೆ ತೋರಿದಳು. ನಿತ್ಯ ಬ್ರಾಹ್ಮಣರಿಗೆ ನಮಿಸಿ ಬೇಡುವಂತೆ, ಆ ಬ್ರಾಹ್ಮನಿಗೆ ಬೇಡುವಳೆಂದು ಎಲ್ಲರೂ ತಿಳಿಯಬಹುದೇ ಹೊರತು, ನೀಚರಿಗೆ ಶರಣಾದಂತೆ ತೋರಲಿಲ್ಲ. ಆದ್ದರಿಂದ ''ಕಾಮದಾಳಿಗೆ ತುತ್ತಾದವರೆಲ್ಲ, ಜಡ-ಚೇತನ ಉಚ್ಚ-ನೀಚ ವಿವೇಕವಿಲ್ಲದೆ, ಎದುರಾದವರಿಗೆಲ್ಲ ದೈನ್ಯ ತೋರುವರು'' ಎಂದು ಹೇಳಿ, ಕಾಳಿದಾಸನು – ಮೇಘದೂತನಿಗೆ ಯಕ್ಷ ಮೊರೆ ಇಡುವುದನ್ನು ಸಮರ್ಥಿಸಿದ್ದು ಅಸಮಂಜಸವಾಗಿದೆ. ರುಕ್ಮಿಣಿಯು ಕೃಷ್ಣಕಾಮದಿಂದ ಆರ್ತಳಾಗಿದ್ದರೂ ಹಾಗೆ ದೈನ್ಯ ತೋರಲಿಲ್ಲವಷ್ಟೆ. ಆದ್ದರಿಂದ ಯಕ್ಷನಂತಹ ನೀಚ ಜನರು ಹಾಗೆ ದೈನ್ಯ ತೋರಿದರೂ, ಉನ್ನತ ವ್ಯಕ್ತಿಗಳು ಮಾತ್ರ, ಎಂಥಾ ಕಾಮದಾಳಿ ಇದ್ದರೂ, ದೈನ್ಯ ಪಡೆಯಲಾರರೆಂದೇ ಮನಗಾಣಬೇಕು.

One man pleaded a cloud, which is lifeless, to communicate his love. Another lady begged a thoughtless bird which is expert only in reciting. Whereas Rukmini prayed a naturally intelligent Brahmin, to communicate her love to Krishna. Noble people do not resort to pitiable actions though pervaded with lust.

In the Megha sandesha , poet Kalidasa told that Yaksha tried to send his love message through cloud. How can a lifeless thing like cloud be requested as a messenger, is being defended by the poet that the begging to everything, without differentiating between living and non living, is the nature of all lustful persons. But in the case of Rukmini this rule went wrong; therefore Kalidasa's thinking is incorrect, is being shown by the poet.In Hamsa sandesha princess Damayanthi requested a swan to be a messenger, which is expert only in reciting. Though this is better than a cloud, it is foolishness to select this as a messenger since it is a thoughtless creature and cannot talk according to the circumstances.

**लज्जा नारीसहजसुलभा मां निरुन्धे प्रवक्तुं**
**सर्वज्ञेऽस्मिन् द्विजकुलमणौ निह्नवो वञ्चना स्यात् ।।**
**आलोच्यैवं सरसमधुरोदारमेषा बभाषे**
**निष्कापट्यं गुरुषु कलितं सम्भवेद्भावुकाय ।। १६ ।।**

पुरुषाभिमुख्येन नार्याः संवाद एव दुश्शकः । लज्जाया अन्तरायत्वात् । तत्रापि प्रेमविचारप्राकट्यं चासम्भावितम् । सत्येवं कथं नु सा विप्रसविधे सर्वं स्वहृदयगतमाविश्चक्रे इति शङ्का स्यात् । न हि पत्रं विलिख्य तद्गतं विचारमनुक्त्वैव तत्प्रेषणार्थं विप्रं ययाच इति वक्तुं युक्तम् । तन्मात्रेण कार्यसाफल्यासम्भवात् । कृष्णेन पत्रस्थविषयमधिकृत्य यदि प्रश्नः क्रियते तदा कथमनवगतपूर्वापरविचारो विप्रः समुचितसमाधानप्रदानकुशलो भवेत् । अतो विप्रसविधे सर्वं निवेद्यमेव । तत्कथं सम्पन्नमित्याह । **लज्जेत्यादिना** । एषा रुक्मिणी, एवं आलोच्य बभाषे । विप्रमिति शेषः । अलोचनप्रकारमाह । **लज्जेति** । नार्याः सहजा च सा सुलभा च लज्जा । प्रवक्तुं

समग्रतया हृद्गतं कथयितुम् । मां निरुन्धे प्रतिबध्नाति । रुधिर् आवरणे लट् । यदि लज्जां निमित्तीकृत्य न वच्मि तर्हि, सर्वज्ञे[1] द्विजकुलमणौ अस्मिन् एतद्विप्रविषये, निह्नवः विषयस्य गौप्यकरणेन विश्वासाप्रदर्शनम् । ''अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नव'' इत्यमरः । वञ्चना स्यात् । वाचा अन्यदुक्त्वा मनसाऽन्यचिन्तितमिति वञ्चना स्यात् । विप्रस्त्वयं सर्वं स्वबुद्धिबलादनुमात्येव । यदि मया नोच्यते तर्हि ''एषा किमपि मां पिधत्त'' इति शङ्का ''अहं रुक्मिण्या न विश्वस्त'' इत्याशङ्कापि विप्रस्य स्यादिति समारब्धकार्यसाफल्यं सन्दिग्धं भवति । अतः तत्साफल्यार्थं विप्रसमक्षं सर्वं वक्तव्यमिति एवं आलोच्य, एषा रुक्मिणी सरसं मधुरं उदारं उत्कृष्टं विषयम् । सरसं मधुरं उदारं यथा भवति तथा बभाषे । भाष व्यक्तायां वाचि लिट् । परं रुक्मिणीसम्भाषणं लज्जानिरुद्धं कथं शक्यमित्यतस्तत्समर्थनं करोति । **निष्कापटत्यमिति**[2] । गुरुषु गुरुवर्गे कलितं समर्पितं निष्कापटत्यं कापटत्याभावः ऋजुत्वमिति यावत् । भावुकाय[3] परममङ्गलाय सम्भवेत् कारणं भवेत् । तस्मात् स्वकल्याणार्थं लज्जां दूरीकृत्य गुरुस्थानापन्ने विप्रे निष्कापटत्यापादकं रुक्मिणीसम्भाषणं युक्तमिति भावः । अत्र अर्थान्तरन्यासः ।

ರುಕ್ಮಿಣಿಯ ಮನದೊಳಗೆ ಆಗೊಂದು ಬಗೆಯ ದ್ವಂದ್ವ "ಒಲವಿನ ಮಾತನ್ನು ಮತ್ತೊಬ್ಬರಿಗೆ ಹೇಗೆ ಹೇಳುವುದು? ಅದೂ ಪುರುಷರ ಮುಂದೆ? ಸ್ತ್ರೀಯರೆಲ್ಲರ ಹುಟ್ಟುಗುಣವಾದ ನಾಚಿಕೆ ಮಾತಾಡಲು ತಡೆ ಒಡ್ಡದೀತೆ? ಮತ್ತೆ ಈ ನಾಚಿಕೆಯ ನೆಪಮಾಡಿಕೊಂಡು ಎಲ್ಲವನ್ನೂ ನಾ ಬಿಡಿಸಿ ಹೇಳದಿದ್ದರೆ, ಈ ಬ್ರಾಹ್ಮಣನಿಗೆ ಮೋಸಮಾಡಿದಂತೆ ತೋರುವುದಿಲ್ಲವೆ? ಇವನಾದರೂ ಸರ್ವಜ್ಞ! 'ಇವಳು ನನಗೇನೋ ಮುಚ್ಚಿಡುತ್ತಿದ್ದಾಳೆಂದು' ಅಂದುಕೊಳ್ಳುವುದಿಲ್ಲವೆ?" ಹೀಗೆ ಮನ ತೂಗಾಡುತ್ತಿದ್ದರೂ ರುಕ್ಮಿಣಿಯು ಸರಸವಾಗಿ ಮಧುರವಾಗಿ ಎಲ್ಲವನ್ನೂ ಆ ಬ್ರಾಹ್ಮಣನ ಮುಂದೆ ನುಡಿಯಲು ಆರಂಭಿಸಿದಳು. ಗುರು-ಹಿರಿಯರ ಮುಂದೆ ಏನನ್ನೂ ಮುಚ್ಚಿಡದೆ ವರ್ತಿಸಿದರೆ ಮಾತ್ರ ಬಾಳು ಬಂಗಾರವಾಗುವುದಷ್ಟೆ

Rukmini thought for herself "how can I convey my feelings to the

---

१. सर्वज्ञेऽस्मिन्निति ॥ विषयसप्तमीयम् ।

२. निष्कापट्यमिति ॥ गुणवचनब्राह्मणादिभ्य - ० (५-१-१२४) इति ष्यञ् ॥

३. भावुकायेति ॥ भू प्राप्तावित्यस्मात् 'लषपतपद-०' (३-१-५४) इत्युकञ् ॥

Brahmin as the natural shyness is preventing me. At the same time if I hide my expressions to the Brahmin who knows everything, it amounts to deceiving him". After thinking for a while she spoke to the Brahmin frankly in a sweet voice and fascinating style. Unhypocratic behaviour in front of revered people will always yield better results.

**जातं वंशे भुवनविदिते ब्राह्मणानां प्रसिद्धे**
**जानामि त्वां सहजकरुणं प्राणिमात्रेषु तस्मात् ॥**
**सन्देशं मे भगवति समाहर्तुमार्यार्थयेऽहं**
**याञ्चा वन्ध्या न भवति कदाप्याहिता सज्जनेषु ॥ १७॥**

रुक्मिणी हि स्वेष्टसिद्ध्यै तमिदानीं प्रार्थयते । तत्रांशत्रयमपेक्षितम् । प्रार्थ्य-मानस्य स्वोत्तमत्वम्, स्वकार्यकरणोत्सुकत्वं, तत्र दक्षत्वमिति । तदुपपादनपूर्वकं रुक्मिणीसम्भाषणं निरूपयति कविः ॥ **जातमित्यादिना** ॥ आर्य सत्कुलप्रसूत । ''महाकुलकुलीनार्यसभ्यसज्जनसाधवः'' इत्यमरः । अथवा कर्तव्यकर्मकुशलेत्यर्थः । यथोक्तम्

कर्तव्यमाचरन् काममकर्तव्यमनाचरन् ।
तिष्ठति प्रकृताचारे स तु आर्य इति स्मृत ॥ इति ॥

त्वां भुवनविनुते प्रसिद्धे ब्राह्मणानां वंशे जातं सन्तं अहं जानामि । एवं प्राणिमात्रेषु[१] सकलप्राणिषु सहजकरुणं सन्तं च जानामि । तस्मात्, ब्राह्मण-वंशजातत्वेन स्वकर्मनिष्ठत्वेन उत्तमत्वात्, भुवनविनुतवंशजातत्वेन सर्वकर्मदक्षत्वात्, प्राणिमात्रेषु सकरुणत्वेन मदीयकार्योत्सुकत्वसम्भवात् त्वां त्वामेव मे सन्देशं भगवति समाहर्तुं समर्पयितुम् । अर्थये प्रार्थये । अर्थ उपयाञ्चायां लट् । त्वयि प्रार्थना सफलेति समर्थयते । **याञ्चेति** । सज्जनेषु आहिता निक्षिप्ता भक्त्या समर्पितेति यावत् । याञ्चा

---

१. प्राणिमात्रेष्विति ॥ प्राणिन एव प्राणिमात्राणि तेषु । मयूरव्यंसकादिसमासः । कार्त्स्न्ये मात्रशब्दः ।

कदापि वन्ध्या निष्फला न भवति । वन्ध्यापदेन गर्भफलासमर्थस्त्रियः प्रतिभानात्, याञ्चायाः तद्विलक्षणत्वस्य सर्वत्र विद्यमानत्वात्, तत्सार्थक्यार्थं याञ्चायामपि स्त्रीत्वमारोप्य, सज्जनपाणिग्रहणभाग्यवती नारी याञ्चारूपा कदापि वन्ध्या न भवतीति भावो द्रष्टव्य इति । अत्र अर्थान्तरन्यासः । कालिदासेन तु ''याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा'' इति यदुक्तं, तस्यायं प्रतिक्षेपः । सत्सु कृताया याञ्चाया मोघात्वाभावादिति ।

ರುಕ್ಮಿಣಿ ಹೀಗೆ ಹೇಳುತ್ತಾಳೆ :-

''ಓ ಬ್ರಾಹ್ಮಣ! ನೀನು ಜಗತ್‌ಪ್ರಸಿದ್ಧ ಮನೆತನಸ್ಥ ಆಚಾರ್ಯ ಎಂದು ನಾ ಬಲ್ಲೆ. ಇದಲ್ಲದೆ, ನಿನಗೆ ಪ್ರಾಣಿ ಸಾಮಾನ್ಯದಲ್ಲೂ ಸಹಜವಾಗಿ ಕರುಣೆ ಇದೆಯಂತೆ. ಆದ್ದರಿಂದ ನನ್ನ ಮೇಲೂ ಸ್ವಲ್ಪ ಕರುಣೆ ತೋರು. (ಓ ಆರ್ಯನೆ ! ನೀನು ದೊಡ್ಡ ಆಚಾರ್ಯನಾದರೂ, ಈಗ ದೂತನಂತೆ,) ನನ್ನ ಸಂದೇಶವನ್ನು ಶ್ರೀ ಕೃಷ್ಣನಿಗೆ ಅರ್ಪಿಸಲು ಸಹಾಯ ಮಾಡೆಂದು ಬೇಡುತ್ತೇನೆ. ಸಜ್ಜನರಿಗೆ ಬೇಡು ವುದು ಎಂದಿಗೂ ನಿಷ್ಫಲವಾಗದೆಂದು ನಂಬಿದ್ದೇನೆ. (ಆದ್ದರಿಂದ, 'ಫಲ ಸಿಗುವುದೆಂದು ನೀಚರನ್ನು ಬೇಡುವುದಕ್ಕಿಂತ, ವ್ಯರ್ಥವಾದರೂ ಉತ್ತಮರನ್ನೇ ಬೇಡಬೇಕೆ'ಂದು ಒಬ್ಬ(ಕಾಳಿದಾಸ) ಹೇಳಿದ್ದು ನನಗೆ ಹಿಡಿಸೋದೆ ಇಲ್ಲ. ನಿನ್ನಂಥ ಉತ್ತಮರಲ್ಲಿ ಇಟ್ಟ ಬೇಡಿಕೆ ವ್ಯರ್ಥವಾಗುವ ಸಾಧ್ಯತೆಯೇ ಇಲ್ಲವಷ್ಟೆ.)

Rukmini told him, "I know that you have taken birth in a famous honorable Brahmin family. You have been compassionate towards all creatures. Therefore I request you to convey my message to Lord Krishna". Any request made to noble people will never go barren.

In Meghasandesha Kalidasa told that even the wasteful request to the noble people is better than a fruitful request to low level people. But here the poet shows a flaw in this saying by stating that a request made to noble people will never go barren. If it goes barren, then the requested person's nobility itself becomes questionable.

> ब्रह्मन् भूयो निशमय वचः सावधानं नमस्ते
> प्रस्थातव्या निखिलभुवनाकर्णिता द्वारकापूः ।।

**सौधे गीतं कुवलयदृशां सञ्चरन्तस्तुरङ्गाः**
**यत्र श्रुत्वा दिवि दिनपतेः सादिनं खेदयन्ति ॥ १८ ॥**

न केवलं सन्देशपत्रं गृहीत्वा गन्तुं प्रार्थये । अपि तु सावधानं मद्वचः-श्रवणार्थमपीति भावेन रुक्मिणी वदति । **ब्रह्मन्निति** । ब्रह्मन् हे ब्राह्मण ! ''ब्रह्मा विप्रः प्रजापतिः'' इत्यमरः । भूयः पुनरपि । वचः मद्वचः । सावधानं मनःप्राणिधान-विशेषेण साकं यथा भवति तथा निशमय[1] श्रुणु । शमु उपशमे णिचि लोट् । ते तुभ्यं नमः । अधुना त्वया निखिलभुवनैः आकर्णिता संश्रुता द्वारका इति पूः पुरी । 'पूस्त्री पुरीनगर्यौ च' इत्यमरः । त्वया प्रस्थातव्या गन्तव्या अस्ति । द्वारकागमने उत्साहोत्पत्यर्थं तद्वर्णनं करोति । **सौध इत्यादिना** । यत्र द्वारकायाम् । सौधे राजसदने कुवलयदृशां उत्पलवत् प्रफुल्ला दृक् नेत्रं यासां तासां सुन्दरीणाम् । गीतं गानम् । ''गीतं गानमिमे समे'' इत्यमरः । श्रुत्वा । दिवि नभसि । सञ्चरन्तः । दिनपतेः सूर्यस्य । तुरङ्गाः अश्वाः । सादिनं सारथिम् । ''सादिनौ द्वौ सारथिहयारोहौ'' इत्यमरः । खेदयन्ति तिष्ठन्तः मन्दमेव सञ्चरन्तो वा खेदयुतं कुर्वन्ति । खिद दैन्ये णिचि लट् । तथा च अश्वादिपशूनामपि द्वारकापुरी परमप्रियेति किमु मानुषाणामिति भावो बोध्यः । द्वारकायां सूर्योऽपि मन्दगतिरिति एतेन व्यक्तं भवति । तेन तापाधिक्ये अपि गीताह्लादेन सूर्यतुरगश्रवणानुकूलतयोहितेन सौधोन्नत्येन च तदुपशमश्च व्यज्यत इति द्वारकागमनोत्साहः विप्रस्य स्यादिति भावः । अत्र गीतश्रवणेन अश्वाः निवृत्त-गतयः इति विवक्षितार्थस्य सादिखेदकरत्वेन भङ्ग्यन्तरेण प्रतिपादनात् पर्यायोक्ता-लङ्कारः ॥

ಓ ಬ್ರಾಹ್ಮಣ ! ನಿನಗೆ ಮತ್ತೆ ಮತ್ತೆ ನಮಸ್ಕರಿಸುವೆ. ನಾ ಹೇಳುವುದನ್ನು ಸ್ವಲ್ಪ ಗಮನವಿಟ್ಟು ಕೇಳಯ್ಯ. ಎಲ್ಲರೂ ಕಿವಿತುಂಬ ಕೇಳಿದ್ದ ಪ್ರಸಿದ್ಧ ದ್ವಾರಕೆಗೆ ನೀನೀಗ ಹೋಗಲೇಬೇಕಾದ ಸಂದರ್ಭವಿದೆ. ಅದು ಬಲುಸುಂದರ ನಗರ. ಅಲ್ಲಿ ಮಹಡಿ ಮೇಲೆ ಜಿಂಕೆಗಣ್ಣಿನ ಚೆಲುವೆಯರು ಇಂಪಾಗಿ ಹಾಡುತ್ತಿದ್ದರೆ, ಸೂರ್ಯರಥ ಎಳೆವ ಕುದುರೆಗಳು ಅದನ್ನು ಕೇಳುತ್ತಿದ್ದಂತೆ, ಮುಂದಕ್ಕೆ ಕಾಲು ಇಡುವುದೇ ಇಲ್ಲವಂತೆ. ಹತ್ತಿರವೇ ಸೂರ್ಯನಿದ್ದರೂ ಬಾರದ ಬೆವರೆಲ್ಲ ಆ ಸಾರಥಿಗೆ ಆಗ ಒಮ್ಮಿಲಿಗೆ ಹರಿವುದಂತೆ.

---

१. निशमयेति ॥ 'ण्यन्तात् शमेः शपि, गुणे, अयादेशे हेर्लुकि रूपम्' ॥

Oh! Brahmin, my salutations to you. I once again request you to listen to my words carefully. Now you are required to go to Dwaraka, the world famous city,where the towers are filled with the songs sung by the young & beautiful ladies, hearing which, the galloping horses in the sky trouble the charioteer of the sun. (Thus the poet exaggerated that the heights of the towers in Dwaraka are sky-high.)

**यद्द्रष्टव्यं श्रुतिनयपरामर्शलोलैः समाधौ**
**यत्सान्निध्यं हृदयवचनातीतसौख्यस्य भूमिः ॥**
**तद्द्रष्टासि क्षपितकलुषं द्वारकां प्रस्थितस्त्वं**
**पूर्णं सर्वैरनवधिगुणैर्ब्रह्म कृष्णाभिधानम्** ॥ १९ ॥

यदृच्छाप्तसन्तृप्तस्य पञ्चाग्निषु तपश्शीलस्य विप्रस्य नैतादृशद्वारकातिशयज्ञापनेन गमनोत्साह इति मत्वा, तदपेक्षितानर्घपदार्थसम्प्राप्तिप्रलोभनेन द्वारकागमने विप्रं प्रोत्साहयति । **यदिति** । श्रुतीनां वेदानां नयस्य ब्रह्ममीमांसायाश्च परामर्शे विचारे अथवा श्रुतौ हरिकथाश्रवणे नयपरमर्शे च, लोलैः सतृष्णैः आसक्तैरिति यावत् । ''लोलश्चलसतृष्णयोः'' इत्यमरः । समाधौ अनायाससाध्ये ध्यानविशेषे । ''खण्ड-स्मृतिर्धारणा स्यात् अखण्डा ध्यानमुच्यते । अप्रयत्ना समाधिःस्यात्'' इत्युक्तेः । यत् वस्तु द्रष्टव्यं[1] वर्तते । ''आत्मा वाऽरे द्रष्टव्यः, श्रोतव्यो मन्तव्यो निदिध्यासितव्य'' इति श्रुत्यर्थसङ्ग्रहोऽयम् । श्रुतिपदेन श्रवणरूपसाधनं, नयपरामर्शेन मननं, समाधिना निदिध्यासनं, दर्शनं च साक्षादेव गृहीतमिति भावः । एवं, यस्य सान्निध्यं[2] संनिधिः, हृदयवचने अतीतं यत्सौख्यं तस्य भूमिः प्राप्तिस्थानम् । तत् तादृशं । क्षपितानि

---

१.द्रष्टव्यमिति ॥ दृश् धातोः 'तव्यत्तव्यानीयरः' (३-१-९६) इति कर्मणि तव्यप्रत्यये ''सृजिदृशोर्झल्यमकिति'' (६-१-५८) इति सूत्रादमागमे, यणि द्रश् + तव्यदिति स्थिते व्रश्चेति षत्वे, तकारस्य ष्टुत्वे रूपम् ॥

२. सान्निध्यमिति ॥ सन्निधिशब्दात् चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानमिति ष्यञि वृद्धौ रूपम् ।

निरस्तानि कलुषाणि येन तत् क्षपितकलुषम् । सर्वैः अशेषैः अनवधिभिः किञ्चिन्निष्ठोत्कृष्टतानिरूपितापकृष्टत्वरूपावधिरहितैः गुणैः उत्कर्षप्रयोजकधर्मविशेषैः ज्ञानान्दादिभिः पूर्णम् । कृष्णाभिधानं कृष्ण इति अभिधानं शब्दः वाचकत्वेन यस्य तादृशं ब्रह्म, त्वं द्वारकां प्रस्थितः[1] सन् प्राप्तः सन् द्रष्टासि ईक्षिष्यसे । दृशिर् प्रेक्षणे लुट् मध्यमैकवचनम् । तथा च भगवद्दर्शनकामुकस्य विप्रस्य तदुद्देशसाधकद्वारकाप्रस्थाने अत्यन्तमुत्साहो भवतीति भावः । अत्र स्वभावोक्त्यलङ्कारः ॥

ಓ ವಿಪ್ರ ! ವೇದ-ಶಾಸ್ತ್ರಚಿಂತನ-ಮಂಥನ ನಡೆಸಿ ಸಮಾಧಿಯೋಗದಲ್ಲಿ ಯಾರ ದರ್ಶನ ಪಡೆಯಬೇಕೋ ಆ ವಸ್ತು ಅಲ್ಲಿ ಕಾಣಸಿಗುತ್ತದೆ. ಯಾರ ಸನಿಹವು ಮನ-ವಚನ ದೂರ ಸಂತಸದ ನೆಲೆಯೊ, ಆ ವಸ್ತು ದ್ವಾರಕೆಯಲ್ಲಿ ಸಿಗುತ್ತದೆ. ಹೌದು, ದೋಷ ದೂರ ಅನಂತಗುಣಾಕರ ಪರಬ್ರಹ್ಮನೇ ಅಲ್ಲಿ ಕಾಣುತ್ತಾನೆ. ಸಿಗುತ್ತಾನೆ. ಅವನೇ ಶ್ರೀಕೃಷ್ಣ ಎಂಬ ಹೆಸರಿನವನು. (ಆದ್ದರಿಂದ ಬ್ರಾಹ್ಮಣನಾದ ನಿನಗೆ ದ್ವಾರಕೆಯ ಸೌಂದರ್ಯ ಸವಿಯಲು ಉತ್ಸಾಹ ಬಾರದಿದ್ದರೂ ಶ್ರೀ ಕೃಷ್ಣನಿರುವುದರಿಂದ ಅಲ್ಲಿಗೆ ಹೋಗಲು ಉತ್ಸಾಹವೆಂದು ಭಾವಿಸುತ್ತೇನೆ.)

On reaching Dwaraka, you will see such a thing, that can only be seen in Samadhi yoga by the masters of Vedas & Meemamsa, the proximity of which is the source of indescribable and unimaginable pleasures. That thing is none other than PARABRAHMA, with the name as Lord Krishna who is full of infinite virtues without any blemish.

**मेघं मत्वोपमिततडितं ब्रह्मसूत्रं दधानं**
**नीलं कायं कलितनिगमोदात्तघोषं भवन्तम् ॥**
**पथ्यागन्तुं गृहिण इव सुस्वागतेनाद्रियन्ते**
**नित्योद्रिक्ता मधुरनिनदा बर्हिणश्चातकाश्च ॥ २० ॥**

'स्याद्वारकायामपेक्षितलाभः । परं तु मार्गे बहुक्लेश इति' मत्वा विप्रो निरुत्साहो माभूयादिति मार्गे वैदिकब्राह्मणापेक्षितस्य गृहस्थसत्कारस्य निरूपणं करोति । **मेघमिति** । हे विप्र इति शेषः । एवमुत्तरत्रापि । उपमिता तडित् सौदामिनी येन तत्

१. प्रस्थित इति ॥ गत्यार्थाकर्मकश्लिषशीङ्स्थास- ०' (३-४-७२) इति कर्तरि क्तः ॥

उपमिततडितम् । ब्रह्मसूत्रं यज्ञोपवीतम् । दधानं धरन्तम् । नीलं कायं दधानम् । कलितः निगमस्य य उदात्तः उच्चैनिर्बद्धः घोषः येन तादृशम् । भवन्तम् । मेघं सन्तं मत्वा । बर्हिणः मयूराः । ''मयूरो बर्हिणो बर्ही''इत्यमरः । चातकाश्च मेघावलम्बि-पक्षिविशेषा इति यावत् । नित्योद्रिक्ताः[१] नित्यं त्वदागमनादारभ्य त्वत्सन्निधानकाले सदा संवृद्धाः आनन्दोद्रिक्ताः सन्तः । तत्सूचकत्वेन मधुरः निनदः शब्दः येषां तादृशाः सन्तः । ''शब्दे निनादनिनदध्वनिध्वानरवस्वनाः'' इत्यमरः । गृहिणः इव गृहस्था इव पथि आगन्तुं स्वगृहं प्रत्यागन्तुं सुस्वागतेन आद्रियन्ते आदरं कुर्वन्ति । दृङ् आदरे लट् । वेदध्वनिं कुर्वतः ब्रह्मसूत्रधरस्य ब्रह्ममीमांसाशास्त्रचतुरस्य च वैदिकब्राह्मणस्य भवतः सर्वत्र स्थले गृहिणः आतिथ्यं कुर्वन्ति इत्यसंशयम् । यतो हि जनरहित-स्थलेऽपि मयूरा चातका अप्यादरं कुर्वन्ति तदा किमु गृहिण इति । सत्कारो हि आनन्दपूर्वकश्चेदेव हि स्वीक्रियते । आनन्दश्च शारीरिकनर्तनादिचर्यया वाङ्माधुर्येण च व्यज्यत इति प्रकृते तन्निरूपणं च कृतं भवति । एवं यदृच्छाप्ततृप्तस्य तव न तदादरेण विनान्यत् किमप्यस्ति लभ्यम् । अपि तु त्वयैव तेषां इष्टार्थवृष्टिरिति मेघसारूप्येणापूर्वमर्थं निरूपयति । अत्र भ्रान्तिमद्रूपकोपमानानां सङ्करः ॥

(ಓ ಬ್ರಾಹ್ಮಣ! ಇಲ್ಲಿಂದ ದ್ವಾರಕೆಗೆ ಹೋಗುವಾಗ ಹಾದಿಯಲ್ಲಿ, 'ನನ್ನನ್ನು ಕೇಳುವರಾರೆಂದು' ಚಿಂತಿಸಬೇಡ.) ನಿನ್ನ ನೀಲ ಮೈ ಬಣ್ಣ, ಮಿಂಚಿನಂತೆ ಹೊಳೆವ ಜನಿವಾರ ನೋಡಿ, ಗುಡುಗಿನಂತೆ ಇರುವ ವೇದ ಘೋಷ ಕೇಳಿ, ನವಿಲುಗಳು ಚಾತಕಿಗಳು ನಿನ್ನನ್ನು ಮೋಡವೆಂದೇ ಭಾವಿಸುತ್ತವೆ. ಹರ್ಷದಿಂದ ಹಿರಿ ಹಿರಿ ಹಿಗ್ಗಿ ಇಂಪಾಗಿ ಕೂಗುತ್ತವೆ. 'ನಮ್ಮ ಬಳಿಗೆ ಬಾ - ನಮ್ಮತ್ತ ಬಾ' ಎಂದು ಗೃಹಸ್ಥರಂತೆ ಆದರದಿಂದ ಸ್ವಾಗತ ನೀಡುತ್ತವೆ. (ಅಂದರೆ, ವೇದಘೋಷ ಮಾಡುತ್ತ ಯಜ್ಞೋ-ಪವೀತ ಧರಿಸಿ ಕಳೆ ಕಳೆಯಾಗಿ ಬರುವ ನಿನಗೆ ದಾರಿಯುದ್ದಕ್ಕೂ ಅನೇಕ ಗೃಹಸ್ಥರು ನಾ ಮುಂದೆ ತಾ ಮುಂದೆ ಎಂದು ನಿನಗೆ ಸ್ವಾಗತ ನೀಡುತ್ತಾರೆ. ಆದ್ದರಿಂದ ಉತ್ಸಾಹದಿಂದ ಸಾಗುವನಾಗು.)

Having seen your dark complexion of the body, the lightning sacred thread (Brahma sutra) and the thunderous chanting of Vedas make the birds like peacock and chataka to assume you to be the king of cloud. Then they sing melodiously and dance happily to invite you like GRIHASTHAS ( house holders) with full respect to come in their way.

---

१. नित्योद्रिक्ता इति ॥ उदुपसर्गपूर्वकात् रिच् धातोः क्तप्रत्यये रूपम् ।

**श्रुण्वत्यस्त्वन्मुखकमलतो निस्सृतं कृष्णशब्दं**
**तत्सौन्दर्यं श्रवणसरणिप्रापितं संस्मरन्त्यः ॥**
**बद्धोत्कण्ठाः किमपि वनिताश्चिन्तयन्त्यश्च चित्ते**
**तत्तद्देशे विदधति महापूजनं मामदस्त्वम् ॥ २१ ॥**

गृहस्थैरादरे कृतेऽपि गृहिणी यदि नाद्रियते तदा नातिथेः सन्तोषो जायत इति तादृशाशङ्कापि विप्रस्य माभूदिति तद्वनिताविलासं वर्णयति । **शृण्वत्य इति** । हे विप्र ! त्वन्मुखकमलतः तव मुखं कमलमिव मुखकमलं तस्मात् । निस्सृतं कृष्ण इति शब्दं शृण्वत्यः सत्यः । श्रवणस्य श्रोत्रस्य सरणिः मार्गः तेन प्रापितं मनसा प्राप्तं चेति यावत् । तत्सौन्दर्यं कृष्णसौन्दर्यम् । संस्मरन्त्यः सत्यः । बद्धा उत्कण्ठा श्रीकृष्णस्पृहा यासां ताः बद्धोत्कण्ठाः। यद्यपि ''चिन्ता तु स्मृतिराध्यानं स्मरणं, सस्पृहे पुनः । उत्कठोत्कलिके''इत्यभिधानात् सस्पृहस्मृतेरुत्कण्ठशब्दार्थत्वम् । तथापि स्मृतेः संस्मरन्त्य इत्यनेनैव लाभात्, विशिष्टवाचकपदानां सति पृथगेकदेशवाचकपदसामीप्ये तदवशिष्टार्थमात्रपरत्वमिति न्यायेन स्पृहामात्रपरत्वमत्रेति बोध्यम् । एवं चित्ते । किमपि निर्वक्तुमशक्यम् । विषयं चिन्तयन्त्यः सत्यः वनिताः तत्तद्देशे तस्मिन् तस्मिन् स्थले । महापूजनं गृहस्थापेक्षया अतिशयितमर्चनं विदधति कुर्वन्ति । श्रीकृष्णनामोच्चारणशीलस्य तव सर्वत्र गृहिणीभिरपि आदरातिशयः क्रियत इति भावः । परं तु त्वं मा मदः मा प्रमदः मदि हर्षे लुङ् । मत्कार्यादिति शेषः । तत्स्त्रीकृतपूजाविशेषेण तत्रैव स्थास्यसि चेत् मत्कार्यं भग्नं भवेदिति भावः । अथ वा स्वश्रुतकृष्णनाम्ने समर्पितं तद्गौरवं केवलं स्वार्थमिति भ्रमो माभवेदिति परिहासोक्तिरिति वा भावः । अत्र उपमा । प्रेयोऽलङ्कारश्च । महापूजनरूपविभावव्यञ्जितायाः विप्रविषयकरतेः 'किमपि चिन्तयन्त्यः' इत्यत्र 'किमपि' इत्यनेन सूचितः हर्षरूपः व्यभिचारिभावोऽङ्गमिति ॥

(ಆ ಗೃಹಸ್ಥರು ಸ್ವಾಗತಿಸಿದರೂ, ಮನೆಯ ಗೃಹಿಣಿಯರು ಆದರಿಸದೆ ಇದ್ದರೆ, ಏನು ಲಾಭ ? ಎಂದು ಯೋಚಿಸುವುದೇ ಬೇಡ.) ಓ ಬ್ರಾಹ್ಮಣ ! ತಾವರೆಯಂತೆ ಅಗಲವಾದ ನಿನ್ನ ಮುಖದಿಂದ ಯಾವಾಗಲೂ 'ಕೃಷ್ಣ' ಎಂಬ ಶಬ್ದ ಹೊರ ಬರುವುದಷ್ಟೆ. ಅದನ್ನು ಕೇಳಿದ ಕೂಡಲೆ, ಈಗಾಗಲೇ

ಬಹಳವಾಗಿ ಕಿವಿ ತುಂಬ ಕೇಳಿರುವ ಶ್ರೀ ಕೃಷ್ಣನ ಸೌಂದರ್ಯ ಅವರಿಗೆ ನೆನಪಾಗುತ್ತದೆ. ಕಂಠ ಬಿಗಿದು ಗದ್ಗದಿತವಾಗುತ್ತದೆ. ಮನದಲ್ಲಿ ಏನೇನೋ ಧ್ಯಾನ ಆರಂಭವಾಗುತ್ತದೆ. ಕೃಷ್ಣನಲ್ಲಿ ಚಿತ್ತಾವೇಶಕ್ಕೆ ಕಾರಣನಾದ ನಿನಗೆ ಆ ಗೃಹಸ್ಥರಿಗಿಂತ ಮಿಗಿಲಾಗಿ ಆದರಾತಿಥ್ಯವನ್ನು ಅವರು ಸಲ್ಲಿಸುತ್ತಾರೆ. ಆಗ ನೀನು ಬಹಳ ಉಬ್ಬಿ ಹೋಗಬೇಡ. ನನ್ನ ಕೆಲಸ ಮರೆಯಬೇಡ.

On the way, hearing the word "Krishna" through your lotus face the women remember the charms of Lord Krishna, which is already heard by them. With their throats choked and deeply thinking about something (undesscribable), they will honour you in all the places. Do not get carried away but proceed further.

**मार्गं तावन्निशमय सुखं कंसहन्तुर्नगर्याः**
**सन्देशोक्तीस्तदनु भगवन् धारयान्तर्मदीयाः ॥**
**चैलप्रान्ते घटय सुदृढं ग्रन्थिभिर्मद्वितीर्णं**
**पत्रं गोप्यं भवति च यथा त्वं तथेदं विधेहि ॥ २२ ॥**

द्वारकागमने विप्रस्यापि प्रयोजनं निरूप्य, मार्गेऽपि तस्यानुकूल्यं प्रतिपाद्याधुना मार्गं प्रतिपादयति । **मार्गमिति** । हे भगवन् पूज्य । तावत् आदौ । सन्देशश्रवणात् पूर्वम् । कंसहन्तुः[१] कंससंहारकस्य कृष्णस्य । नगर्याः द्वारकायाः । मार्गं सुखं यथा भवति तथा निशमय श्रुणु । तदनु तदनन्तरम् । मदीयाः[२] मत्सम्बन्धिन्यः । सन्देशोक्तीः सन्देशवाचः । अन्तः हृदये । धारय अवस्थापय । धृञ् अवस्थाने णिचि लोट् । मार्गविचारस्य श्रोतव्यत्वेऽपि न तस्य सन्देशवत् प्राधान्यं इति वैलक्षण्यं, सन्देशमात्रस्य हृदि अवस्थापनप्रेरणेन विज्ञायते । मद्वितीर्णं मया प्रदत्तं पत्रं चेलस्य वस्त्रस्य प्रान्ते, ग्रन्थिभिः बन्धविशेषैः "ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्णयोः" इति मेदिनी । सुदृढं यथा भवति तथा । घटय निबद्धं कुरु । घट चेष्टायां णिचि लोट्। गमनादिकाले मार्गे पत्रं निपतितं सन्नष्टं मा भवितव्यमिति भावः । इदं एतत् समस्तं

१. कंसहन्तुरिति ॥ तृन्नन्तमेतत् ॥

२. मदीयाः इति ॥ 'युष्मदस्मदोरन्यतरस्यां खञ्च' इति चात् छप्रत्यये, 'प्रत्ययोत्तरपदयोश्च' इत्यनेन मपर्यन्तस्य अस्मच्छब्दस्य मादेशे छस्येयादेशे मदीय इति रूपम् ॥

कार्यम् । यथा गोप्यं[1] भवति त्वं तथा विधेहि कुरु । डु धाञ् धारणपोषयोर्लोट् । रुक्म्यादीनां एतद्विचारः अत्यन्तं गोप्यो भवितव्य इति भावः ।

ಕಂಸ ಹಂತಕನಾದ ಶ್ರೀ ಕೃಷ್ಣನ ದ್ವಾರಕಾಪುರಕ್ಕೆ ಸುಖವಾಗಿ ಹೋಗಲು, ಮೊದಲು ಮಾರ್ಗವನ್ನು ಕೇಳು. ಆ ಮೇಲೆ ನನ್ನ ಸಂದೇಶದ ಮಾತುಗಳನ್ನು ಹೃದಯದೊಳಗೆ ಸರಿಯಾಗಿ ಸೆರೆ ಹಿಡಿದುಕೊ, ಓ ಪೂಜ್ಯನೇ ! ನಾ ನೀಡುವ ಪತ್ರಮಾತ್ರ ಶಲ್ಯದ ಅಂಚಿಗೆ ಗಟ್ಟಿ ಗಂಟು ಹಾಕಿ ಟೊಂಕಕ್ಕೆ ಸಿಕ್ಕಿಸಿ ಕೊಂಡಿರು. ಇದೆಲ್ಲವೂ ಗೌಪ್ಯವಾಗಿ ಆಗಬೇಕು. ಅದಕ್ಕೆ ಸಮಯೋಚಿತವಾಗಿ ಹೇಗೆ ವರ್ತಿಸ ಬೇಕೊ, ಹಾಗೆ ನಡೆದುಕೊ.

Oh respected Brahmin! Listen to me comfortably the route to the city of Lord Krishna. Then bear in your heart my message. Tie my letter firmly with knots to your robes and fix it with your waist. Act accordingly to keep everything a secret.

**निष्क्रान्तोऽस्याः सपदि वरदां निम्नगां त्वं नगर्याः**
**तीर्त्वा हृद्यं नयनमनसोराश्रमं विप्र यायाः ॥**
**तस्मिन् शुक्रो निवसति सुताप्रेमसर्पिःप्रदीप्ते**
**यत्क्रोधाग्नौ नहुषतनयो यौवनं स्वं जुहाव ॥ २३ ॥**

मार्गे प्रथमतः शुक्राश्रमप्राप्तिं प्रतिपादयति । **निष्क्रान्त इति** । हे विप्र त्वं अस्याः नगर्याः कुण्डिनायाः निष्क्रान्तः निर्गतःसन्, सपदि शीघ्रं वरदां तन्नाम्नीं, निम्नगां नदीम् । ''स्रवन्ती निम्नगापगा'' इत्यमरः । तीर्त्वा । नयनमनसोः हृद्यं आश्रमं यायाः प्राप्नुहि । या प्रापणे विधि लिङ् । तस्मिन् आश्रमे शुक्रः दैत्यगुरुः निवसति । तं वर्णयति । **सुतेत्यादिना** । सुतायां देवयान्यां यत्प्रेम तदेव सर्पिर्घृतं तेन प्रदीप्ते अत्युज्वले, यस्य शुक्राचार्यस्य क्रोध एव अग्निस्तस्मिन्, नहुषतनयः ययातिः, स्वं यौवनं[2] जुहाव आहुतिरूपेण प्रक्षिप्तवान् । हु दानादानयोः लिट् । शर्मिष्ठानाम्नीमपरां जायां न स्पृशामीति देवयान्यै दत्तवचनः ययातिः यदा तद्वच उल्लङ्घ्य शर्मिष्ठा-

१. गोप्यमिति ॥ गुपू रक्षणे इत्यस्मात् 'ऋहलोर्ण्यत् (३-१-१२४) इति ण्यत् ॥
२. यौवनमिति ॥ हायनान्तयुवादिभ्योऽण् (५-१-१३०) इति अणि, अणि परतः अन् (६-४-१६७) इति प्रकृतिभावः ॥

रूपमोहितस्सन् तस्यामासक्तस्सन् पुत्रानजीजनत्, तदा क्रुद्धया देवयान्या प्रचोदितः शुक्राचार्यः ययातेः यौवननाशहेतुं शापं दत्तवानिति कथा ।। शुक्रस्येतादृशक्रोध-ग्रस्तत्वात्तत्र स्थले चिरं मा तिष्ठेति निरूपणव्याजेन शीघ्रं स्वसन्देशो नेतव्य इति रुक्मिण्या हार्दं व्यक्तं भवति । अत्र रूपकालङ्कारः ।।

ಓ ವಿಪ್ರನೆ ! ನಮ್ಮ ಈ ಕುಂಡಿನಾಪುರದಿಂದ ಹೊರಟ ಮೇಲೆ, ಎದುರಾಗುವ ವರದಾ ನದಿಯನ್ನು ಬೇಗ ದಾಟಿದಾಗ ಒಂದು ಸುಂದರ ಆಶ್ರಮ ಸಿಗುತ್ತದೆ. ಅದು ಕಣ್ಣನ ಸೆಳೆಯುತ್ತದೆ. ಅಲ್ಲೇ ಶುಕ್ರಾಚಾರ್ಯ ನೆಲೆಸಿದ್ದಾನೆ. ಅವನು ಬಹಳ ಸಿಡುಕನಂತೆ. ಮುದ್ದಿನ ಮಗಳಾದ ದೇವಯಾನಿಯ ಮೇಲಣ ಮಮತೆಯು ತುಪ್ಪದಂತಾಗಿ, ಅವನ ಸಿಟ್ಟೆಂಬ ಬೆಂಕಿಯನ್ನು ಉರಿ ಉರಿಸಿದಾಗ, ಯಯಾತಿಯು ತನ್ನ ಯೌವನವನ್ನೇ ಅಲ್ಲಿ ಆಹುತಿಯಾಗಿಟ್ಟು ಭಸ್ಮ ಮಾಡಿಕೊಂಡನಂತೆ.

Once you start and cross the river Varada, you reach the hermitage of Shukracharya, which is hearty and fascinating. In the past, Yayathi sacrificed his youth in Shukracharya's anger which was a blazed fire for which the love, for his daughter Devayani, acted like fuel.

**निर्यातोऽस्मान्मुनिजनतपःपुण्यभूमेः प्रयायाः**
**तापीनाम्नीं मधुरसलिलामापगानां वरेण्याम् ।।**
**यस्यां स्नास्यच्छबरवनितालोचनानीक्षमाणाः**
**मीना दीना इव धृतभया वेष्टुमिच्छन्ति नाभिम् ।। २४ ।।**

**निर्यात इति** । मुनिजनानां तपसा पुण्या पवित्रिता भूमिः यस्य तस्मात् अस्मात् आश्रमात् निर्यातः त्वं, आपगानां नदीनां मध्ये, वरेण्यां श्रेष्ठाम्, तापी इति नाम यस्यास्तां मधुरं सलिलं जलं यस्याः तादृशीं नदीं प्रयायाः प्राप्नुहि । यस्यां ताप्याम् । स्नास्यन्तीनां[१] स्नानोद्युक्तानां शबरवनितानां लोचनानि ईक्षमाणाः मीनाः, दीनाः सन्तः तल्लोचनसौन्दर्येण पराजिता इति कृशाः सन्तः, तदभिमुखमवस्थातुं धृतभया इव, कुत्रचित् निलेतुकामाः । तासां इति शेषः । नाभिं वेष्टुं प्रवेष्टुं इच्छन्ति । तादृशी तापीति पूर्वेणान्वयः । एतेन नद्याः जले स्वच्छता, शबरस्त्रीणां मीनाक्षित्वं गाढनाभित्वमिति सौन्दर्यातिशयः प्रकटितो भवतीति भावः । अत्र

१. स्नास्यदिति ।। 'ष्णा शौचे' इत्यस्मात् भविष्यति शत्रन्तम् ।

उत्प्रेक्षा । वनितालोचनेक्षणरूपविशेषणस्य मीनदैन्योपपादकस्वापेक्षयोत्कृष्ट-तल्लोचनेक्षणरूपार्थव्यञ्जकत्वेन परिकरः । अथवा, वनितालोचनेक्ष्यमाणमीनदैन्येन वनितानां मीनाक्षित्वरूपार्थव्यञ्जनात् पर्यायोक्तम् ।।

ಆ ಆಶ್ರಮ ಅನೇಕ ತಾಪಸರ ಮಹಿಮೆಯಿಂದ ಬಹಳ ಪವಿತ್ರ ಕ್ಷೇತ್ರವಾದರೂ ಬೇಗ ಮುಂದೆ ಸಾಗು. 'ತಾಪೀ' ಎಂಬ ಸಿಹಿನೀರಿನ ದೊಡ್ಡ ನದಿ ಸಿಗುತ್ತದೆ. ಅಲ್ಲಿ ಸ್ನಾನ ಮಾಡುವ 'ಬೇಡ'ರ ಯುವತಿಯರ ವಿಶಾಲ ಕಣ್ಣು ನೋಡಿದೊಡನೆ, ಮೀನುಗಳೆಲ್ಲ ಸೋತು ಸೊರಗಿ ಬೆವತು ಭಯ ಗೊಂಡು ಎಲ್ಲಾದರೂ ಅಡಗಿಕೊಳ್ಳಬೇಕೆಂದು ಹುಡುಕಾಡಿ, ಕಡೆಗೆ ಅವರ ಹೊಕ್ಕಳೊಳಗೆ ಹೊಕ್ಕಲು ಹೋಗುತ್ತವೆಯಂತೆ. (ಆ ಬೇಡತಿಯರು ನೀಳ ನಾಭಿವುಳ್ಳ, ಮೀನಾಕ್ಷಿಯರೆಂದು, ತಾಪಿಯ ತಿಳಿ ನೀರು ಈ ಸೊಗಸನ್ನು ಬಯಲು ಗೊಳಿಸುವುರೆಂದು ಭಾವವು.)

After leaving this holy place of sages you will reach big river Tapi. In this river, on looking at the wide eyes of the bathing SHABARA women, the fishes with fear and inferiority complex, try to hide themselves in those women's deep navels.

Here the poet describes the beauty of the Shabara women by highlighting that their eyes are wider than the shape of a fish and their navels are very deep.

**निष्क्रान्तोस्याः सुरभिसरितो याहि विन्ध्यप्रदेशं**
**योऽलङ्कारो विलसति भुवः पश्यतां मेखलेव ।।**
**यस्मिन् तारागणमिव कुटाः पुष्पवृन्दं वहन्तः**
**कूटाश्लिष्टा भवति पथिके दिव्यगन्धं किरन्ति ।। २५ ।।**

**निष्क्रान्त इति** । अस्याः सुरभिसरितः सुगन्धयुक्तनद्याः ताप्याः निष्क्रान्तः त्वं विन्ध्यप्रदेशं याहि । विन्ध्यं वर्णयति । **य इति** । यः पश्यतां भुवः अलङ्कारः मेखला इव कटिभूषणमिव । ''स्त्रीकट्यां मेखला काञ्ची'' इत्यमरः । विलसति भासते । लस श्लेषणक्रीडनयोर्लट् । यस्मिन् विन्ध्ये । तारागणं इव नक्षत्रमण्डलमिव । पुष्पवृन्दं कुसुमसमूहम् । वहन्तः धरन्तः । कूटाश्लिष्टाः कूटेषु गिरिशृङ्गेषु अन्योन्यतया सम्बद्धाः । ''कूटं पूर्द्वारयन्त्रयोः । मायादम्भाद्रिशृङ्गेषु'' इति हैमः । कुटाः वृक्षाः । ''अनोकहः कुटः स्याल'' इत्यमरः । पथिके पान्थे । ''पान्थः पथिक इत्यपि''

इत्यमरः । भवति त्वयि । दिव्यं अलौकिकं गन्धं किरन्ति विक्षिपन्ति । कृ विक्षेपे । वर्तमानसामीप्याल्लट् । एवमुत्तरत्रापि । तथा च सुरभिसरितं परित्यज्य गच्छतस्ते दिव्यसुरभिलाभात् तत्त्यागो नानर्थकः इति भावः । अत्र उपमा ॥

ಸುವಾಸನೆ ಬೀರುವ ಈ ತಾಪಿಯನ್ನು ತೊರೆದು, ಅಲ್ಲಿಂದ ಮುಂದೆ ವಿಂಧ್ಯದ ನಾಡಿಗೆ ಕಾಲಿಡು. ಮುಗಿಲಿನಲ್ಲಿ ನಿಂತು ನೋಡಿದರೆ, ಈ ವಿಂಧ್ಯಾಚಲದ ಸಾಲು, ಭಾರತಮಾತೆಗೆ ನಡುಪಟ್ಟಿಯಂತೆ ಕಾಣುತ್ತದೆ. ಗಿರಿಶಿಖರಗಳಲ್ಲಿ ಒತ್ತಾಗಿರುವ ಮರಗಳಂತೂ, ನಕ್ಷತ್ರ ಪುಂಜದಂತೆ ಪುಷ್ಪರಾಶಿ ಧರಿಸಿ, ಪಯಣಿಗರಿಗೆ ದೇವಲೋಕದ ಪರಿಮಳವನ್ನೇ ಚೆಲ್ಲುತ್ತವೆಯಂತೆ. (ಸುಗಂಧಭರಿತವಾದ ತಾಪಿಯನ್ನು ತೊರೆದು ಅಲ್ಲಿಗೆ ಬಂದ ನಿನಗೆ ಮತ್ತೂ ಮಿಗಿಲಾಗಿ ಸುಗಂಧ ಸಿಗುತ್ತದೆ ಎಂದು ಭಾವವು.)

After crossing the fragrant river Tapi, you will reach Vindhya. This place looks like an ornamental waistband of earth for the viewers. The apex of the mountain range is full of trees, which, bearing flowers like a bunch of stars, spread fragrance on your way.

**तत्रैवास्ति त्रिदशनगरीचुम्बिधूमध्वजश्रीः**
**भीतादित्यप्रखरतपसां यज्वनां वासभूमिः ॥**
**स्तन्यं सिंह्यो ददति जननीसन्निधानच्युतेभ्यो**
**यत्र प्रेम्णा सहजगलितं कृष्णसारात्मजेभ्यः ॥ २६ ॥**

केवलं घ्राणतर्पणेन क्षुधोपशमो न शक्य इति चिन्तायामुत्तरपद्ये तत्रातिथ्यस्वीकारार्थं प्रचोदयन्ती रुक्मिणी, विप्रस्यास्य शुचिशीलस्य तत्रस्थजनकृतभोजनादिपरिग्रहार्थं तेषां शुचित्वं पावित्र्यं महत्वं च प्रदर्शयति । **तत्रैवेतीति** । त्रिदशानां देवानां नगर्याश्चुम्बनशीला या धूमध्वजस्य अग्नेः श्रीः प्रभा यस्याः सा । याज्ञियाग्नितापः अमरावत्यधस्थलं स्पृशतीति यावत्। भीतः आदित्यः येभ्यः तेषां प्रखरं तपः येषां तेषां । यज्वनां विधिवत् होतॄणां । "यज्वा तु विधिनेष्टवान्" इत्यमरः । वासभूमिः तत्रैव विन्ध्यप्रदेश एव अस्ति । तथा च यज्वनां तेषां विप्रत्वावश्यम्भावात्, तदन्नस्य च हविश्शेषरूपत्वेन स्वीकारार्हत्वात्, भीतादित्यप्रखरतपस्त्वेन शुचित्वपावित्र्यादीनां सिद्धेस्तव तत्रातिथ्यस्वीकारो युक्त इति भावः । ननु लोकवञ्चनार्थं विप्रवेषं धृत्वा यज्ञशीलाश्च केचित्सन्तीति तत्साम्यशङ्का कथं परिहार्येत्यत

आह । **स्तन्यमिति**[1] । यत्र वासभूमौ सिंह्यः[2], जनन्याः सन्निधानेन सामीप्येन च्युतेभ्यः कृष्णसारवत्सेभ्यः प्रेम्णा सहजं गलितं स्रुतं स्तन्यं स्तनक्षीरं ददति । डु दाञ् दाने लट् । तादृशवासभूमिरिति पूर्वेणान्वयः । तथा च क्रूरमृगाणामपि अहिंसास्वभावः इति लोकविलक्षणवर्तनं तत्रस्थतपस्विनां तपोमाहात्म्यनिमित्तमिति पश्यतस्ते तेषु यज्वषु डाम्भिकत्वाशङ्का नावकाशं लभत इति भावः । एवमत्र याज्ञियाग्नितापस्य सुरनगरीतलस्पर्शित्वोक्त्या सुरसभायां धूमगर्भता, तेषां विचारेऽपि 'एतेभ्यः किं फलं देय' मित्यत्र विवादेन तापातिशयश्चोह्य इति तत्फलतयैव सिंह्योऽपि कृष्णसारवत्सेभ्यः स्तन्यदा इति स्थितिश्चेत् किमुत जनानामपेक्षिताखिलावाप्तिस्थितिर्वर्णनीयेति भावो बोध्यः । अत्र काव्यलिङ्गात्युक्त्योः सङ्करः ॥

ಆ ವಿಂಧ್ಯದ ನಾಡು ಅನೇಕ ಯಾಜ್ಞಿಕರ ಬೀಡು. ಅವರ ಕಡು ತಪಸ್ಸಿಗೆ ಸೂರ್ಯನೂ ಬೆಚ್ಚಿ ಬೀಳು ತ್ತಾನಂತೆ. ಅವರ ಯಜ್ಞ ಯಾಗಗಳ ಅಗ್ನಿಯ ಬಿಸಿ ಸುರಲೋಕದ ತಳಕ್ಕೆ ತಾಕಿ ಕಾವೇರಿಸುತ್ತದೆ ಯಂತೆ. ಹೊಗೆಯಂತು ಒಳ ಹೊರಗೆ ತುಂಬುವುದಂತೆ. ಆಗ ಆ ಹೊಗೆಯಲ್ಲೇ ಕಾವೇರಿದ ಸುರಸಭೆ ಜರುಗುವುದಂತೆ. ಯಾಜ್ಞಿಕರ ತಪಸ್ಸಿಗೆ ಏನೇನು ಫಲ ನೀಡಬೇಕೆಂಬ ಬಗ್ಗೆ ಚರ್ಚೆಯಂತೆ. ಅದರ ಫಲವೋ ಏನೋ, ಈ ವಿಂಧ್ಯದಲ್ಲಿ ನೋಡು. ತಾಯಿಸಿಗದೆ ಹಸಿದು ಕಂಗೆಟ್ಟ ಪುಟ್ಟ ಜಿಂಕೆ ಮರಿಗೂ ಸಿಂಹಿಣಿಯು, ಪ್ರೀತಿಯಿಂದ ಮೊಲೆ ಹಾಲ ಉಕ್ಕಿಸುತ್ತ ಉಣ್ಣಿಸುವ ವಾತಾವರಣವಿದೆಯಂತೆ.

Yagnikas are living there. Even sun is afraid of their pungent penance. The heat generated by the Yagas touch the bottom of the divine city of heaven. The lioness affectionately feed naturally oozing out breast milk to the fawns who are separated from mothers, is seen there. (This is an example of the sanctity of that place due to the non-violent atmosphere).

**तत्रातिथ्यं परिधुतसुधासारभोज्यं प्रपन्नः**
**मार्गक्लिशं प्रशमय ततः पश्चिमेन प्रयाहि ॥**

---

१. स्तन्यमिति ॥ स्तने भवं स्तन्यम् । ष्टन शब्दे इत्यस्मात् यति रूपम् ।

२. सिंह्यः इति ॥ जातेरस्त्रीविषयादयोपधादिति (४-१-६३) ङीष् ।

किञ्चिद्रेवापरिसरमरुत्सेवनाह्लादचेताः
त्वं वस्तूनामनुभव सुखं दर्शनेनाद्भुतानाम् ॥ २७॥

**तत्रेति** । तत्र यज्वनां मन्दिरे परिधुतः तिरस्कृतः सुधासारः येन तत् भोज्यं आतिथ्यं[१] प्रपन्नः प्राप्तः सन् त्वं मार्गे भवं क्लेशं प्रशमय । उपशमयेत्यर्थः । प्रोपसर्ग-पूर्वकात् शमु उपशमे इति धातोः णिचि लोट् । ततः पश्चिमेन मार्गेण प्रयाहि गच्छ । रेवायाः नर्मदायाः । ''रेवा तु नर्मदा सोमोद्भवा मेखलकन्यका'' इत्यमरः । परिसरः समीपदेशः । ''पर्यन्तभूः परिसर'' इत्यमरः । तस्य य मरुत् शीतवायुस्तस्य सेवनेन आह्लादः यस्य तत् तादृशं चेतः यस्य सः सन् । त्वं अद्भुतानां वस्तूनां दर्शनेन सुखं अनुभव । अत्र परिकरः । परिधुतसुधासारभोज्यत्वरूपविशेषणव्यङ्ग्यस्य तुष्टिपुष्टि-क्षुधपायकरत्वस्य तदातिथ्यस्वीकारसमर्थनाभिप्रायकत्वात् ॥

ಅಷ್ಟು ದೂರ ಸಾಗಿ ಹಸಿವಾದಾಗ ಬ್ರಾಹ್ಮಣನಾದ ನಿನಗೆ ಆ ಯಾಜ್ಞಿಕರ ಮನೆಯಲ್ಲೇ ಊಟೋ-ಪಚಾರ ಸರಿಯಾದೀತು. ಮಿಗಿಲಾಗಿ ಅವರು ಬಡಿಸುವ ರಸದೂಟದ ಮುಂದೆ ಅಮೃತವೂ ಬೇಡ. ಆದ್ದರಿಂದ ಅಲ್ಲೇ ಊಟ ಮಾಡಿ ಸ್ವಲ್ಪ ಆಯಾಸ ನೀಗಿಸಿಕೊಂಡು ಪಶ್ಚಿಮಕ್ಕೆ ಸಾಗು. ರೇವಾ ನದಿಯ ಪರಿಸರ ಸಿಗುತ್ತದೆ. ಅಲ್ಲಿ ಬೀಸುವ ತಂಗಾಳಿ ಮನ ತಣಿಸುತ್ತದೆ. ಮತ್ತೆ, ಬೆರಗಾಗಿಸುವ ಅನೇಕ ಸಂಗತಿಗಳು ಕಾಣುತ್ತಲೇ, ಖುಷಿಯೂ ಆಗುತ್ತದೆ.

These Yagnikas will extend their hospitality to you by offering delicious sweets, which are sweeter than the nectar of heaven. After resting for some time, proceed towards west; the breeze coming from the river Reva will enchant you. Enjoy looking at the wonderful objects.

यस्याः कुञ्जे तटपरिगते सौरतक्रीडनेभ्यो
विश्रान्तानां स्मरशरसमाक्रान्तसीमन्तिनीनाम् ॥

---

१. आतिथ्यमिति ॥ ब्राह्मणादित्वात् ष्यञ् ॥

**अङ्गासङ्गी मृगमदसमामोदवान् स्वेदसङ्घः**
**कामे वृष्टः सुमचय इवाभासते कामिवृन्दैः ॥ २८ ॥**

किं तत् अद्भुतं दृश्यं तदाह । **यस्या इति** । पूर्वेणान्वितम् । यस्या रेवाया तटपरिगते तीरस्थिते । कुञ्जे लतामण्टपे, ''निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे'' इत्यमरः । सौरतक्रीडनेभ्यः[१] सौरतक्रीडां विधाय । विश्रान्तानां विश्रान्तिस्थानाम् । स्मरस्य मन्मथस्य शरैः बाणैः पुष्पैरित्यर्थः । समाक्रान्ता याः सीमन्तिन्यः कामिन्यस्तासाम् । सीमन्तिनीशब्दग्रहणेन तेषां केशसौन्दर्यप्रकर्षः व्यक्तो भवति । ततश्च तादृशकेशेषु धृतप्रसूनानामतिशयः, सौरतानन्तरं तेषां सुमानां श्लथनमिति कुञ्जकुसुमपतनमिति सीमन्तिनीनां स्मरशरसमाक्रान्तता । तादृशस्त्रीणां अङ्गानां आसङ्गी अतिशयेन सम्बद्धः । मृगमदः कस्तूरी ''मृगनाभिर्मृगमदः कस्तूरी च'' इत्यमरः । तस्य समः आमोदः सुगन्धः अस्यास्तीति मृगमदसमामोदवान् । स्वेदानां स्वेदजलकणानां सङ्घः समूहः। स समूहः कामिवृन्दैः कामुकानां समूहैः । कामे तत्कामिनीतन्वाविष्टकामस्योपरि वृष्टः सुमचय इव पुष्पसमूह इव आभासते पश्यतस्तवेति शेषः । भासृ दीप्तौ लट् । सुरतानन्तरं स्त्रीणां कामाधिक्यमिति प्रतीतेः स्त्रीषु कामावेशात्, स्त्रीतनौ वृष्टः स्वेदः कामोपर्येव पर्यवसितो भवतीति भावः । अत्र स्मरशरेत्यत्रातिशयोक्तिः । कामे वृष्टः सुमचय इव पुष्पसमूह इव आभासते इत्यत्र तु उत्प्रेक्षा । सीमन्तिनीशरीरे काम आविष्ट इत्यस्य रीत्यन्तरेण कामे वृष्टिरूपेण प्रतिपादनात् पर्यायोक्तम् ॥

ಆ ರೇವೆಯ ತೀರದ ಹತ್ತಿರ ಸುಂದರ ಹೂಹಂದರಗಳಲ್ಲಿ, ತರುಣಿಯರು ಸುರತವಾಡಿ ವಿಶ್ರಮಿಸಿಕೊಳ್ಳುವಾಗ, ಕಾಮನು ಮತ್ತೆ ಅವರ ಮೇಲೆ ಹೂಬಾಣಗಳಿಂದ ಮುತ್ತಿಗೆ ಹಾಕುವನಂತೆ. ಆಗ ಅವರ ಮೈಗೆ ಅಂಟಿರುವ, ಕಸ್ತೂರಿಯಂತೆ ವಾಸನೆ ಬೀರುವ (ನಲ್ಲರ) ಬೆವರ ಹನಿಮುತ್ತುಗಳಂತು, ಅವರ ಮೈಗೆ ಹೊಕ್ಕಿರುವ ಕಾಮನ ಮೇಲೆ, ಕಾಮುಕರು ಹೂಮಳೆಗರೆದ ಹಾಗೆ ತೋರುವುದಂತೆ.

---

१. सौरतक्रीडनेभ्य इति ॥ ल्यब् लोपनिमित्ता पञ्चमी । क्रीड्यन्त इति क्रीडनानि भावे ल्युट् । सुरतस्य सम्बन्धीनि सौरतानि । सौरतानि क्रीडनानि सौरतक्रीडनानि तेभ्यः ॥

(ಸುರತದ ಆಟ ಸಾಕೆಂದು, ಆ ತರುಣಿಯರು ಎದ್ದು ಹೋಗುವಾಗ ತಂಗಾಳಿಗೆ ಹೂಹಂದರದ ಹೂಗಳನ್ನುದುರಿಸಿ ಅವರಲ್ಲಿ ಕಾಮನೆಯನ್ನು ಪುನಃ ಉಂಟುಮಾಡಿರುವ ಆ ಕಾಮನಿಗೆ ಆ ಕಾಮುಕರು ಸ್ವಲ್ಪವಾದರೂ ಕೃತಜ್ಞತೆ ತೋರಬೇಕಷ್ಟೆ, ಅದಕ್ಕೆ ಈ ಬೆವರು ಬಿಂದುಗಳ ಪುಷ್ಪಾಭಿಷೇಕ! ಹೀಗೆ ರೇವೆಯ ದಡದಲ್ಲಿ ಬಗೆ ಬಗೆಯ ಬೆರಗಾಗಿಸುವ ಸಂಗತಿಗಳು ಇರುತ್ತವೆಯಂತೆ.)

In the arbour on the bank of river Reva ladies are seen relaxing after the copulation. The ladies again being haunted by the arrows of cupid, the drops of sweat as fragrant as musk, stuck their bodies looks as though the flowers showered by the lustful men on cupid.

(After the copulation, when the flowers of arbour showered on these ladies, again the lust enters them. Then the drops of sweat of their lovers fallen on them looks like the shower on KAMA (lust).

**तां रेवां त्वं पुरजनमुखान्मार्गमालोच्य यायाः**
**तस्यास्तीरे कलितवसतिं धारयस्वेन्दुमौलिम् ॥**
**चित्तागारे शमदमतपःशौचनिर्धूतपङ्के**
**भक्त्युद्रेकामृतरससमासेकहृद्यान्तराले ॥ २९ ॥**

**तामिति** । हे विप्र त्वं पुरजनमुखात्[1] पुरजनमुखं अनुसृत्य । मार्गं आलोच्य, तां रेवां नर्मदानदीं, यायाः प्राप्नुहि । ततः तस्याः रेवायाः । तीरे तटे, कलितवसतिं कृतनिवासम् । ''वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतन'' इति मेदिनी । इन्दुमौलिं चन्द्रशेखरं शिवम् । चित्तागारे चित्तमेवागारं मन्दिरं तस्मिन् । ''भवनागार-मन्दिरं'' इत्यमरः । धारयस्व अवस्थापय । धृङ् अवस्थाने णिचि लोट् । रेवातीरगतमन्दिरं विहाय विप्रहृदयमन्दिरे कथमिन्दुमौलिरवतिष्ठेदित्याशङ्कायां चित्तागारं विशिनष्टि । **शमेत्यादिना** । शमः हरिभक्तिः । दमः इन्द्रिय जयः । ''शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रह'' इत्युक्तेः । शौचं तु ''अभक्ष्यपरिहारश्च संसर्गश्चाप्य-निन्दितैः । स्वधर्मे च व्यवस्थानं शौचमित्यभिधीयते ।'' इत्युक्तदिशा स्वविहित-वृत्त्यादिनिष्ठतारूपम् । तैः निर्धूतं निरस्तं पङ्कं पापं यस्मिन् तादृशे । ''अस्त्री पङ्कं

१. पुरजनमुखादिति ॥ ल्यब्लोपनिमित्ता पञ्चमी ।

पुमान् पाप्मा पापं किल्बिषकल्मषम् ।''इत्यमरः । भक्तेः उद्रेक एव पक्वावस्था एव अमृतरसस्य सम्यक् आसेकः आसेचनम् । 'सेचनं रक्षणे सेके' इति सेचनस्य सेकपर्यायत्वात् । तेन हृद्यं अन्तरालं अभ्यन्तरस्थलं यस्मिन् तादृशे । ''अभ्यन्तरं त्वन्तरालं'' इत्यमरः । चित्तागारे इन्दुमौलिं प्रतिष्ठापयेत्यर्थः । यथाहि प्रथमतः सम्मार्जनं विधाय जलसेचनतः स्वच्छे स्थले सर्वः स्थातुमिच्छति तथैव इन्दुमौलिरपि त्वच्चित्तागारे अवस्थातुमिच्छतीति अतस्तं हृदि धारयस्वेति रुक्मिण्यभिप्रायः । पूर्वं हि अद्भुतवस्तुदर्शनेन सुखमनुभवेत्युक्तम् । तच्च वस्तु पूर्वश्लोकोक्तं कामिन्यादिरूपं, एवमेतच्छ्लोकोक्तं चन्द्रमौलिरूपं चेति रेवातीरे द्वयं प्रसक्तम् । तत्र चन्द्रमौलिमात्रस्य हृदये धारणं युक्तम् । न तु पूर्वश्लोक्तदृश्यस्येति भावोऽपि अत्र लभ्यते । एवं विप्रस्यास्य तदेव शक्यमित्यपि बोद्धव्यम् । अत्र रूपकम् । निर्धूतपङ्क इत्यत्र श्लेषः ॥

ಓ ವಿಪ್ರನೆ ! ಕಣ್ಣಿಗೆ ಕಂಡದ್ದೆಲ್ಲ ಮನಸಿನಲ್ಲಿಡುವವನು ನೀನಲ್ಲ. ಶಮ–ದಮ–ತಪಸ್ಸುಗಳಿಂದ ಮಡಿ ಮಡಿಯ ಅನುಷ್ಠಾನದಿಂದ ನಿಷ್ಕಲ್ಮಷವಾದ ನಿನ್ನ ಹೃದಯ ಮಂಟಪಕ್ಕೆ ಇಂಥ ಕಾಮ ಸಂಗತಿಗಳು ಅರ್ಹವೂ ಅಲ್ಲ. ಆದ್ದರಿಂದ ಆ ಹೃದಯದಲ್ಲಿ ರೇವೆ ತೀರದಲ್ಲೇ ಬೀಡು ಬಿಟ್ಟಿರುವ ರುದ್ರದೇವರನ್ನು ಪ್ರತಿಷ್ಠಾಪಿಸು. ಕಸಗುಡಿಸಿ ಸ್ವಚ್ಛವಾದಂತೆ ನಿಷ್ಕಳಂಕವಾದ ಹಾಗು ಭಕ್ತಿಯ ಅಮೃತಕಾರಂಜಿ ಚಿಮ್ಮುವುದರಿಂದ, ಒಳ ಭಾಗವೆಲ್ಲ ಸಾರಿಸಿಟ್ಟಂತೆ ಸುಂದರವಾದ ನಿನ್ನ ಹೃದಯ ಮಂಟಪದಲ್ಲಿ ನೆಲೆಸುವುದೇ ಆ ಶಿವನಿಗೆ ಇಷ್ಟವಾಗುತ್ತದೆ. ಅದಕ್ಕಾಗಿ, ಊರಿನ ಮಂದಿಯನ್ನು ಕೇಳುತ್ತ, ದಾರಿಯನ್ನು ತಿಳಿದುಕೊಂಡು, ರೇವೆಯ ಬಳಿಗೆ ಪಯಣ ಮಾಡು.

After consulting the route from the local people, you will reach the river Reva. On the bank of this river there is an abode of Lord Chandrashekhara. Bear him in your heart which is look like a temple, being purified by the good qualities like, Shama, Dama, Tapas, Shoucha, etc., and which is beautiful from inside by the sprinkling of nectar called the immense devotion.

**हृद्यस्वच्छस्तबककुचयोर्बिम्बितां पञ्चवक्त्रीं**
**दृष्ट्वा देवी दशमुखसमायातमाशङ्कमाना ॥**
**कैलासाद्रिप्रचलनभिया गाढमाश्लिष्य भेजे**
**यं बाहुभ्यां हिमगिरिसुतास्वप्रतीके विभूतिम् ॥ ३० ॥**

चन्द्रशेखरं वर्णयति **हृद्येत्यादिपद्यद्वयेन**। द्वयमप्युत्तरेण तस्मिन् इत्यनेनान्वितम्। देवी पार्वतीदेवी। हृद्यौ दर्पणवत् स्वच्छौ स्तबकवत् पुष्पगुच्छवत् वर्तुलौ मृदुलावपि कठिणौ यौ कुचौ तयोः[1] एकैकश इति शेषः। बिम्बिताम् प्रतिबिम्बिताम्। पञ्चवक्त्रीं[2] पुरतः स्थिस्य रुद्रस्य पञ्चानां मुखानां वृन्दम्। ''ध्येयः पञ्चमुखो रुद्र'' इति तन्त्रसारोक्तेः। दृष्ट्वा। दशमुखस्य रावणस्य समायातं समागतिम्। आशङ्कमाना सती। एकैकस्तनाग्रतः रुद्रमुखपञ्चकदर्शनेन आहत्य दशमुखानां दर्शनं भवतीति, रावण एव दशमुख इति स एवाधुनात्रागतः स्यादिति शङ्का पार्वत्या इति भावः। ततश्च कैलासाद्रेः कैलास इति प्रसिद्धस्य गिरेः। प्रचलनस्य कम्पनस्य भिया भयेन। पूर्वं आत्मलिङ्गलाभाय तपश्चरन् रावणः शिवेन तदलाभे सति, कैलासपर्वतस्याधस्तात् पाणिं प्रसरन् तमुद्धृत्य सशैलं शिवं स्वपुरमानिनीषुः प्रवृत्तः। तदा च शिवस्स्वात्मलिङ्गं दत्तवानिति, पार्वती च तल्लिङ्गं पाणौ धृतवतः रावणस्य पृष्ठतो ययाविति कथा। ततश्च रावणेन पार्वत्याः शिववियोगः कारित इति भावः। इदानीं रावणसमागमाशङ्क्या तत्कथास्मरणेन कैलासाद्रिप्रचलनभीतिः पार्वत्याः सञ्जातेति ज्ञेयम्। ततः सा हिमगिरिसुता पार्वती। यं रुद्रम्। बाहुभ्याम् गाढं आश्लिष्य स्वप्रतीके स्वाववयवे। ''अङ्गं प्रतीकोऽवयव'' इत्यमरः। विभूतिं भस्म। भूतेर्भस्मपर्यायत्वात् विभूतिरपि तथा। ''भूतिर्भस्मनिसम्पत्ता''विति अभिधानम्। भेजे प्रापत्। भज सेवायां लिट्। सेवा च स्वीकाररूपा प्राप्तिरिति यावत्। तथा च पार्वत्याः देहः भस्मलिप्तो बभूवेति भावः। शिवस्य दैत्यमोहनार्थं भगवदादेशेन भस्मधारणतत्परत्वेपि, पार्वत्या कृतं भस्मधारणं तु एतच्छङ्कानिमित्ताश्लेषनिमित्तमिति कविकल्पनाविलासो बोध्यः। अत्र भ्रान्तिमत्सङ्कृता गम्योत्प्रेक्षा ॥

(ನಿನ್ನ ಹೃದಯದಲ್ಲಿ ನೆಲೆ ನಿಲ್ಲುವ ಆ ಶಿವ ಅರ್ಧನಾರೀಶ್ವರ. ಅವನಿಗೆ ನಿತ್ಯವೂ ಪಾರ್ವತಿಯು ಪ್ರೀತಿಯಿಂದ ಬಿಗಿದು ಅಪ್ಪಿರುತ್ತಾಳಂತೆ. ಆದರೆ, ಒಮ್ಮೆ ಹೀಗೂ ಆಯಿತಂತೆ :- ) ಪಾರ್ವತಿಯು ಹೂ ದಂಡೆಯಂತೆ ದುಂಡಾದ, ಕನ್ನಡಿಯಂತೆ ಹೊಳೆವ, ತನ್ನ ಎರಡು ಮೊಲೆಯ ಮೇಲೆ, ಶಿವನ ಐದೈದು ಮುಖಗಳು ಪ್ರತಿಬಿಂಬಿಸಿರುವುದನ್ನು ಕಂಡು ಹತ್ತು ಮುಖವನ್ನು ಒಟ್ಟಿಗೇ ಕಂಡಳಂತೆ ! ಆಗ

---

१. स्तबककुचयोरिति ॥ उपमानानि सामान्यवचनै( २-१-५५)रिति समासः।

२. पञ्चवक्त्रीमिति ॥ द्विगोः(४-१-२१) इति ङीप् ॥

ಹತ್ತುಮುಖದ ರಾವಣನೇ ಬಂದಿದ್ದಾನೋ ಏನೋ? ಎಂದು ಶಂಕೆ! ರಾವಣನೆಂದರೆ ಪಾರ್ವತಿಗೆ ಆತಂಕ. ಹಿಂದೆ ಅವನು ಆತ್ಮಲಿಂಗಕ್ಕಾಗಿ ಕೈಲಾಸವನ್ನೇ ನಡುಗಿಸಿದ್ದನಷ್ಟೆ. ಮತ್ತೆ, ಈಗಲೂ ಹಾಗೆ ಮತ್ತೆಲ್ಲಿ ಕೈಲಾಸ ನಡುಗುವುದೋ ಎಂದು ಹೆದರಿ, ಈ ಶಿವನಿಗೆ ಬಿಗಿಯಾಗಿ ಅಪ್ಪಿದ್ದಳಂತೆ! ಆಗ ಶಿವನ ಮೈಗೆ ಬಳಿದ ವಿಭೂತಿಯೆಲ್ಲ ಪಾರ್ವತಿಯ ಮೈ ತುಂಬ ಮೆತ್ತಿತ್ತಂತೆ.

Once Parvathi, on looking at the reflection of five faces of Shiva on each of her glittering breasts, which were charming like a cluster of flowers, thought as though 10 faced Ravana himself has come. Out of fear of leaving Kailasa (because once Ravana separated Parvathi from Shiva by taking Athmalinga) she soon hugged Shiva and the sacred ash got smeared on her body (Bear such Chandrashekhara in your heart).

SHIVA is also called as ARDHANARISHWARA because he is always tightly hugged by Parvathi. The poet fancies the reason for this hugging as above.

**यो भूतेशोप्यभयमनिशं सन्निधत्ते जनेषु**
**प्रेतागारे कलितवसतिः सर्वलोकं पुनाति ॥**
**भिक्षायै सञ्चरितभुवनः कामितार्थं प्रदत्ते**
**सेव्योऽमर्त्यैर्भवति नितरां कालकूटाशनोपि ॥ ३१ ॥**

**य इति** । यः शिवः । भूतानां ईशः अपि अधिपतिरपि । ''ईशः स्वामिनि रुद्रे च'' इति हलदण्डके । जनेषु भक्तजनेषु । अभयं अनिशं सन्निधत्ते सन्निधापयति । यः, प्रेतागारे प्रेतानां मृतानां आगारे आश्रयस्थले श्मशान इति यावत् । कलिता वसतिः वासः येन स । तादृशोऽपि सर्वलोकं पुनाति पवित्रं करोति । पूञ् पवने लट् । यः, भिक्षायै याञ्चायै । ''भिक्षा याञ्चार्थनार्दना'' इत्यमरः । सञ्चरितं भुवनं येन तादृशः अपि । कामितं अर्थं भक्तेभ्यः प्रदत्ते । डु दाञ् दाने लट् । यः, कालकूटाशनः कालकूटविषमेव अशनं भोजनं यस्य तादृशः अपि । अमर्त्यैः अमृताशनैः देवैः । ''अमर्त्या अमृतान्धस'' इत्यमरः । नितरां सेव्यः भवति । तस्मिन् रुद्रे मम नतीः वदेत्युत्तरेणान्वयः । भूतानां भयङ्करत्वेन रुद्रस्य भूताधिपतित्वेऽपि न भयङ्करत्वमपि तु भयहरत्वमेवास्य हरस्य । सकृत् श्मशानयान एवाशुचित्वप्राप्त्या स्नानादिविधाने,

सदैव तत्र वसतः रुद्रस्य अपावित्र्यं नाशङ्क्यम् । अपि तु लोकपावित्र्यकरत्वमेवास्य गङ्गाधरस्य । कपालभृतोऽस्य रुद्रस्य भिक्षार्थं लोकाटनशीलत्वेऽपि न दारिद्र्यम् । अपि तु सर्वेषां दारिद्र्यं परिहृत्य कामितार्थप्रदत्वमेवास्य शङ्करस्य लोकशङ्करस्य । विष-कण्ठत्वेऽपि नायं विषसदृशः अपि तु अमृतान्धोभिः सेवित इति परमामृतसम इति भावः । अत्र विरोधाभासः तद्ध्वनिश्च ॥

ಆ ಶಿವನು ಭೂತ-ಪ್ರೇತಗಳ ಒಡೆಯನೆಂದು ಹೆದರಿ ದೂರಹೋಗಬೇಡ. ಅವನು ಭೂತರಾಜ-ನಾದರೂ ಜಗತ್ತಿಗೆ ಅಭಯದಾತ. ಮೈಲಿಗೆಯ ಸುಡುಗಾಡಿನಲ್ಲಿ ವಾಸವಾಗಿದ್ದರೂ, ಜಗತ್ತನ್ನು ಪವಿತ್ರಗೊಳಿಸುವಾತ. ಭಿಕ್ಷೆಗಾಗಿ ಎಲ್ಲೆಡೆ ಅಲೆದವನಾದರೂ ಬೇಡುವರ ಇಷ್ಟಾರ್ಥ ನೀಡುವಾತ. ಮತ್ತೆ, ವಿಷ ಕುಡಿದು ವಿಷಕಂಠನೆನಿಸಿದರೂ, ಅಮೃತ ಕುಡಿದ ದೇವತೆಗಳಿಂದ ಅವನೇ ಸೇವಿತ. ಆದ್ದರಿಂದ ಆ ಶಿವನನ್ನು ಹೃದಯದಲ್ಲಿರಿಸು.

Shiva, though is the lord of ghosts, is not fearsome, but instills fear-lessness among people: though has graveyard, an impure place, as his abode, purifies the entire world: though begs all around, fulfills all desires of all: though has poison as drink, prostrated by devas who have nectar as drink.

**तस्मिन् भूयो वद मम नतीः प्रार्थनां चन्द्रमोलौ**
**कात्यायन्यां तपसि कठिणे संस्थितायामवर्षः ॥**
**मय्यप्येवं दितिसुतरिपोः प्रेमपीयूषधारां**
**वर्षन् योगं कलय भजतां भव्यदोसीति नित्यम् ॥ ३२ ॥**

**तस्मिन्निति** । हे विप्र ! तस्मिन् पूर्वश्लोकद्वयप्रतिपादिते । चन्द्रः मौलौ यस्य तादृशे[१] शिवे । भूयः पुनः पुनः । मम नतीः प्रणामान् । तथा प्रार्थनां च वद प्रति-पादय । अहं तं नमामि प्रार्थये चेति तं वदेति भावः । का सा प्रार्थनेति चेत्तामाह । **कात्यायन्यामिति** । कठिने कठोरे । इतरासाध्ये इति यावत् । अथवा दृढ इत्यर्थः। ''कठिनं क्रूरं कठोरं निष्ठुरं दृढ'' मित्यमरः । तपसि संस्थितायां कात्यायन्यां

१. चन्द्रमौलाविति ॥ चन्द्रः मौलौ यस्येति व्यधिकरणपदबहुव्रीहिः । 'सप्तमीविशेषणे बहुव्रीहौ' (२-२-३५) इति सूत्रे सप्तमीग्रहणं व्यधिकरणबहुव्रीहिज्ञापकम् ॥

पार्वत्याम्। ''उमा कात्यायनी गौरी'' इत्यमरः। त्वं अवर्षः अभीष्टवृष्टिमकरः। वृष सेचने लङ्। एवं कठिणे तपसि संस्थितायां मय्यपि। दितिसुतानां रिपोः कृष्णस्य प्रेम एव पीयूषं अमृतं तस्य धारां प्रवाहम्। ''ओघः प्रवाहो वेणी च धारा स्रोतो रयः स्मृत'' इति हलः। वर्षन् वर्षयन्। दितिसुतरिपोः कृष्णस्य योगं कलय प्रापय। मे इति शेषः। त्वं भजतां नित्यं भव्यदः मङ्गलप्रदः। ''कल्याणं मङ्गलं शुभं। भावुकं भविकं भव्यं'' इत्यमरः। असि। इति प्रार्थनां तस्मिन् वदेति योजना। अत्र वध्वा गौरीहरपूजनं कर्तव्यमिति लोकानुकरणं रुक्मिण्या कृतमिति अपिना सूचितम्। अत्र उपमालङ्कारः ॥

ಆ ಶಿವನಿಗೆ, ನಾ ಮತ್ತೆ ಮತ್ತೆ ನಮಿಸುವೆನೆಂದು ಹೇಳು. ಹಿಂದೆ ಕಠಿಣ ತಪಸ್ಸು ಮಾಡಿದ ಪಾರ್ವತಿಗೆ ಅಭೀಷ್ಟ ವರ್ಷಣೆ ಮಾಡಿದಂತೆ, ನನಗೂ ಸಹ ಶ್ರೀ ಕೃಷ್ಣನ ಪ್ರೇಮಾಮೃತದ ವೃಷ್ಟಿ ಸಿಗುವಂತೆ, ಹಾಗು ಅವನ ಮಿಲನ ಆಗುವಂತೆ ಅನುಗ್ರಹಿಸಬೇಕೆಂದು ನಾ ಪ್ರಾರ್ಥಿಸುವುದಾಗಿ ತಿಳಿಸು. ಭಜಿಸುವವರಿಗೆ ಭವ್ಯಬಾಳು ಶಿವನಿಂದಲೇ ಸಿಗುವುದೆಂದು ನಾ ನಂಬಿರುವುದಾಗಿ ಅವಗೆ ಹೇಳು.

Convey my salutations again & again to Lord Shiva on my behalf and submit my prayer that "earlier you had showered Parvathi with the nectar of love, who performed rigorous penance. Similarly now please shower on me with the nectar of love of Lord Krishna and unite us. You always bless with bliss to prayerfulls."

**रेवां तीर्त्वा भृगुकुलमणेराश्रमाश्लिष्टतीरां**
**पश्यंस्तस्याःनिकटवसतीनाश्रमान् याहि यत्र ॥**
**कुम्भाः स्त्रीणां वनतरुलतासेचकानां समत्वात्**
**श्रोणीश्लिष्टाः घनतरकुचस्पर्शसौख्यं भजन्ते ॥ ३३ ॥**

**रेवामिति**। भृगुकुलमणेः परशुरामस्य आश्रमेण आश्लिष्टं अतिशयेन सम्बद्धं तीरं यस्यास्ताम्। रेवां नर्मदां तीर्त्वा। तस्याः रेवायाः। निकटवसतीन् निकटे समीपे वसतिः स्थितिः येषां तान्। आश्रमान् पश्यन् याहि। आश्रमान् वर्णयति। **यत्रेति**। यत्र आश्रमेषु। वनतरुलतासेचकानां उपवने ये तरवः लताश्च तासां सेचकानां जलसेचनकर्त्रीणां स्त्रीणां। श्रोणीश्लिष्टाः श्रोण्यां कटौ। ''कटिःश्रोणिः

ककुद्मती'' इत्यमरः । कुम्भाः । समत्वात् स्वसजातीयत्वात् । घनतरकुचानां स्पर्शस्य सौख्यं[१] सुखम् । भजन्ते प्राप्नुवन्ति । तादृशान् आश्रमान् पश्यन् याहि इति योजना । सजातीया हि लोके परस्परं स्पर्शनभाषणादिपरा मिलिता दृश्यन्ते । विजातीयास्तु न स्पृश्यन्ते । यथा हि विप्रैर्वर्णावरादयः । तथा च तद्वदेव इतरेषां स्प्रष्टुमशक्या कुचा तद्घटमात्रेण स्पृश्यन्त इति तु साजात्यहेतुकमेव स्यादिति कवेरुत्प्रेक्षा । गृहं प्रति जलानयनकाले श्रोणीश्लिष्टघटानां कुचस्पर्शः न भवतीति, वनतरुलतानां जलसेचनकाले तत्सम्भव इतीदं विशेषणं काव्यलिङ्गम् । एतेन तासां कुम्भस्तनीत्वमिति सौन्दर्यातिशयो ध्वनितो भवति । एवं इतरास्पृश्यतनुत्वेन च पावित्र्यातिशय इति तदाश्रममहत्वमपीत्यलम् । अत्र उत्प्रेक्षा काव्यलिङ्गञ्च ॥

ಇದು ರೇವಾ ತೀರದ ಶಿವಸನ್ನಿಧಾನದ ಸಂಗತಿ. ಮತ್ತೆ, ಅಲ್ಲೆ ಭಾರ್ಗವಾಶ್ರಮವೂ ಒತ್ತಾಗಿದೆ. ಅದನ್ನೂ ನೋಡುತ್ತಾ ಆ ನದಿ ದಾಟಿ ಆ ಕಡೆ ಹೋದರೆ, ಅಲ್ಲೂ ಅನೇಕ ಆಶ್ರಮಗಳು ಸಿಗುತ್ತವೆ. ಆ ಆಶ್ರಮದ ಚೆಲುವಿಯರು ಹೂ-ಗಿಡ-ಬಳ್ಳಿಗಳಿಗೆ ನೀರು ಸುರಿಯುವಾಗ, ಅವರ ಟೊಂಕದ ಕೊಡ ಎದೆಗೆ ಗಟ್ಟಿಯಾಗಿ ತಾಕುತ್ತದೆಯಂತೆ. ಆಗ ಅವರ ದುಂಡು ಮೊಲೆಯ ತಾಕಾಟದ ಸುಖ ಕೊಡಗಳಿಗೆ ಸುಲಭವಂತೆ. ಅವೆರಡೂ ಒಂದೇ ರೀತಿಯ ವಸ್ತುಗಳಾದ್ದರಿಂದ ಒಂದಕ್ಕೊಂದು ಜೊತೆಗೂಡಿರಬೇಕೆಂದು ನನ್ನ ಭಾವನೆ. ( ಆ ತರುಣಿಯರು ಕುಂಭಸ್ತನಿಯರಾದ ಚೆಲುವಿಯರೆಂದು ಭಾವವು )

After visiting the Bhargava Ashram, which is located on the bank of river Reva, cross the river and proceed to the other nearby ashrams. There the young women while spraying water to plants & creepers, the pots on their waist enjoy the touch of breasts as they belong to the same class.

**विप्र प्रीतः सुरभिमरुता विन्ध्यपादावलम्बि-**
**प्रोद्यत्पुष्पप्रकरकुटजाश्लेषसौभाग्यभाजा ॥**
**देशं गच्छ त्रिभुवनचणं मालवं भूमिपालैः**
**आक्रान्तत्वादिव दिनमणिर्यत्र मन्दं प्रयाति ॥ ३४ ॥**

---

१. सौख्यमिति ॥ सुखमेव सौख्यम् । 'चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यानम्' इति वार्तिकात् स्वार्थे ष्यञ् ॥

**विप्रेति** । हे विप्र ! त्वं । विन्ध्यस्य ये पादाः प्रत्यन्तपर्वताः । ''पादाः प्रत्यन्तपर्वता'' इत्यमरः । तेषां अवलम्बिनः ये प्रोद्यत्पुष्पप्रकरकुटाः प्रोद्यतां विकसतां पुष्पाणां प्रकरः समूहः येषां तादृशा कुटाः वृक्षाः इत्यर्थः । ''प्रकरः स्यात् पुमान् सङ्घे विकीर्णकुसुमादिषु'' इति मेदिनी । तादृशवृक्षेभ्यः जः जातः य आश्लेषः आलिङ्गनं तदेव सौभाग्यं भजतीति विन्ध्यपादावलम्बिप्रोद्यत्पुष्पप्रकरकुटजाश्लेषसौभाग्यभाक् तेन। सुरभिमरुता सुगन्धयुक्तवायुना । प्रीतः सन् सन्तुष्टः सन् । त्रिभुवनचणं[1] दैवविद्यावीर्य-रूपत्रिभुवनप्रसिद्धम् । मालवं तन्नामकं । देशं गच्छ याहि । गम्लृ गतौ लोट् । तत्र सूर्यस्य मन्दगतेः हेतूप्रेक्षां करोति । **भूमिपालैरित्यादिना** । यत्र मालवे । दिनमणिः सूर्यः ।''द्युमणिस्तरणिर्मित्र'' इत्यमरः । भूमिपालैः राजभिः । आक्रान्तत्वादिव हेतोः । मन्दं शनैः प्रयाति । तादृशमालवदेशं गच्छेत्यर्थः । अत्र हेतूत्प्रेक्षा ॥

ಓ ವಿಪ್ರನೇ ! ಅಲ್ಲಿಂದ ಮುಂದೆ ಹೋಗುತ್ತ, ವಿಂಧ್ಯಾಚಲದ ತಪ್ಪಲಿಗೆ ಬಂದಾಗ, ಅತ್ತಾದ ಹೂ ಮರಗಳಿಗೆ ಅಪ್ಪಿ ಬರುವ ಪರಿಮಳದ ತಂಗಾಳಿಯು ನಿನ್ನನ್ನು ಬಹಳವಾಗಿ ತಣಿಸುತ್ತದೆ. ಆ ಮೇಲೆ ಮಾಲವ ನಾಡಿನತ್ತ ಪಯಣ ಬೆಳೆಸು. ಅಲ್ಲಿರುವ ವೀರ ಕ್ಷತ್ರಿಯರು ದಾಳಿ ಮಾಡಬಹುದೆಂಬ ಅಂಜಿಕೆಗೆ ಸೂರ್ಯನು ಆ ನಾಡಿನ ಮೇಲೆ ಮೆಲ್ಲ ಮೆಲ್ಲನೆ ಸಾಗುತ್ತಾನಂತೆ. ಹೀಗಾಗಿ ಆ ನಾಡು, ಮೂರು ಲೋಕಕ್ಕೂ ಹೆಸರುವಾಸಿ ಆಗಿದೆಯಂತೆ.

Oh Brahmin! Deriving happiness with the cool breeze, which is carrying the fragrance from the flowerful trees grown at the foot of Vindhyachala , proceed to Malava, the world famous state, which is well known even in heaven. In Malava the sun moves with a slow pace as if the kings there attack him. (This is the description of the extent of sun's heat in that place).

**धारानाम्नीं नरपतिपुरीमीक्षसे तत्र मुक्ता-**
**जालोत्कीर्णस्फटिकमणिभिः सन्निबद्धैर्निशान्तैः ॥**
**या ज्योत्स्नेवागणितविदुषां धूतपीयूषवाचां**
**दिग्विक्रान्तामलतरयशोमण्डलीवावभाति ॥ ३५ ॥**

---

१. त्रिभुवनचणमिति ॥ 'तेन वित्तश्चुञ्चुप्चणपौ' (५-२-२६) इति चणप् ॥

सूर्यस्य मन्दगत्या तत्र तापातिशयभीतिशङ्कायां समाधानमिव तद्देशराजधानीं धारां वर्णयति । **धारेति** । हे विप्र त्वं तत्र मालवदेशे । धारानाम्नीं[1] धारा इति नाम यस्यास्ताम् । नरपतेः पुरीं ईक्षसे पश्यसि । कीदृशी धारेत्याह । **मुक्तेत्यादिना** । या धारापुरी । मुक्तानां जालेन राशिना उत्कीर्णाः[2] प्रक्षिप्ता ये स्फटिकमणयः तैः । सन्निबद्धैः खचितैः । निशान्तैः गृहैः ''निशान्तं सदनं वत्स्यमागारं मन्दिरं पुरम्'' इति वाचस्पतिः । ज्योत्स्ना इव भाति । अथवा, धूतपीयूषवाचां धूतं पलायितं पीयूषं याभिस्ता वाचः येषां तेषाम् । अगणितानां विदुषां पण्डितानाम् । दिग्विक्रान्तानि दिक्षु व्याप्तानि अमलतराणि अत्यन्तनिर्मलानि यानि यशांसि तेषां मण्डली इव गोलाकारेण समूह इव । भाति भासते । भा दीप्तौ लट् । तथा च मालवे धारापुरी गृहरुच्या चन्द्रिका इव आह्लादकरीति, एवं तद्गृहाणां पण्डितावासत्वात् तद्वचनानां च अमृतापेक्षया मधुरत्वात् तत्र मन्दगमनदिनमणितापः न भवतीति भावः । भोजराजेन धारानगर्या विद्वदाधारता समासादितेति कथाप्यत्रानुसन्धेया । विदुषां हि गौरवादरहीनं चेत् साक्षाद्धिमांशुमण्डलमपि तापकरमेव । धारायां विदुषां गौरवातिशयः प्रसिद्ध इति बाह्यातपतापः विप्रस्यास्य न क्षोभकर इति मन्तव्यम् । अत्र ज्योत्स्नेवेत्यत्रोपमा । यशोमण्डलीवावभातीति उत्प्रेक्षा ॥

ಆ ಮಾಲವದ ರಾಜಧಾನಿ 'ಧಾರಾ' ನಗರ. ಸ್ಫಟಿಕ-ಮುತ್ತುಗಳಿಂದ ಖಚಿತವಾದ ಆ ಊರ ಮನೆಗಳನ್ನು ಕಂಡರೆ, ಆ ಊರು ಬೆಳದಿಂಗಳ ಮಂಡಲದಂತೆ ಕಂಡೀತು ! ಅಥವಾ ಅಮೃತಕ್ಕಿಂತ ಸವಿಯಾಗಿ ಮಾತಾಡುವ ಆ ಊರಿನ ಕವಿಗಳ ದಿಗಂತ ಧವಳ ಕೀರ್ತಿಯೇ, ದುಂಡಾಗಿ ಮೈವೆತ್ತು ಬಂದಂತೆ ತೋರೀತು ! 'ಧಾರಾ'ನಗರದ ಕವಿಗಳ ಕೀರ್ತಿ ಅಪಾರವಂತೆ.

You will see Dhara, the capital of Malava which is shining like the hallow round of moon because of the white houses embedded with pearls & crystals. The city also looks like the group, of immaculate fames of poets, which is pervaded in all directions. Their words are sweeter than the nectar of Heaven.

---

१. धारानाम्नीमिति ॥ 'अन उपधालोपिनोऽन्यतरस्याम्' (४-१-२८) इति वा ङीप् ॥

२. उत्कीर्णेति ॥ उदुपसर्गात् कृञः कर्मणि क्तप्रत्यये नत्वे च रूपम् ॥

**निर्यातोऽस्याः व्रज कृतजवः कापिलस्वादवद्वाक्-**
**पीयूषाणामिव विलसितं बिन्दुभिर्विप्र वाराम् ॥**
**व्योमेवाब्जैर्बहुभिरलिभिर्लक्ष्यमाणं गभीरं**
**कासारं त्वं नयनसुभगं बिन्दुनाम्ना प्रसिद्धम् ॥३६॥**

**निर्यात इति** । हे विप्र त्वं ! अस्याः धारायाः । निर्यातः निर्गतः सन् । कृतजवः विरचितः गमनवेगः येन तादृशः सन् । कापिला कपिलरूपिहरिसम्बन्धिन्यः । स्वादवत्यः प्रीणनगुणवत्यः । वाचः पीयूषाणीव तेषां कापिलस्वादवद्वाक्पीयूषाणां इव तत्सदृशानाम् वारां जलानाम् । ''आपः स्त्री भूम्नि वार्वारि'' इत्यमरः । बिन्दुभिः विलसितम् । बहुभिः अलिभिः भृङ्गैः । ''षट्पदभ्रमरालय'' इत्यमरः । अब्जैः पुण्डरीकैः । व्योम इव गगनमिव । लक्ष्यमाणं दृश्यमानम् । गभीरं गम्भीरम् । ''निम्नं गभीरं गम्भीरं'' इत्यमरः । नयनयोः सुभगं सुदृश्यम् । ''चक्षुष्यः सुभगो ज्ञेय'' इति हलः । बिन्दुनाम्ना बिन्दु इति नामधेयेन । प्रसिद्धम् । कासारं सरः प्रति । व्रज गच्छ । व्रज गतौ लोट् । यथा हि गगनं गम्भीरं एवमेतत्सरोऽपि । गगनं च रात्रौ सर्वत्र तमसोपबृंहितं सत् तत्र तत्र नक्षत्रैर्धवलप्रभैर्विलसितमिव सरोऽपि सर्वत्रासितवर्णैः भृङ्गैः फुल्लैः पुण्डरीकैर्विलसितमिति भावः । नयनसुभगत्वमुभयोस्तुल्यमेव ।

विन्दुसरोद्वयं ज्ञायते पुराणादिना । एकं तु भगीरथेन गङ्गावतारणार्थं यत्र तपस्तप्तं तत् । यथोक्तम् -

अथोत्तरेण कैलासात् मैनाकं पर्वतं प्रति ।
हिरण्यशृङ्गः सुमहान् महामणिमयो गिरिः ॥
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ।
द्रष्टुं भागीरथीं गङ्गामुवास बहुलाः समाः ॥ इति ॥

तदुत्पत्तिकथा तु -

भवोत्तमाङ्गे पतिता सरम्हा योगमायया ।
तस्या ये बिन्दवः केचित् क्षुब्धाया पतिता भुवि ।

कृतं तु तैर्बिन्दुसरस्ततो बिन्दुसरस्मृतम् ।। इति ।।

परं त्वत्र नेदं बिन्दुसरो विवक्षितमिति ज्ञापयितुं कापिलेत्यादिविशेषणं प्रदत्तम् । हरिः यत्र तपः कृतवते कर्दमाय वरं दत्वा कपिलरूपेणावततार । तथा वरं ददतः सुप्रसन्नस्य हरेः नेत्रात् यत्र आनन्दाश्रुबिन्दुः पपात । अथ च कपिलरूपेण अवतीर्णः हरिः यत्र मात्रे दिव्यं तत्वोपदेशं कृतवान् । तत्तु बिन्दुसरोऽत्र विवक्षितम् । इदं तु सरस्वत्या परिश्रितम् । यथोक्तम्

एवं तमनुभाष्याथ भगवान् प्रत्यगक्षगः ।
जगाम बिन्दुसरसः सरस्वत्या परिश्रितात् इति ।

तत्रैव अवतीर्णो भगवान् कपिलमुनिरवात्सीन्मात्रे तत्वमुपदेष्टुमिति च ज्ञायते । यथोक्तम्

पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया ।
तस्मिन् बिन्दुसरेऽवात्सीत् भगवान् कपिलः किल ।। इति ।।अत्रोपमा ।।

(ಆ ಊರಿನ ಕವಿಜನರ ಕವಿತೆ ಮನ ಸೆಳೆವುದಕ್ಕಿಂತ ಮೊದಲೇ ನೀನು ಅಲ್ಲಿಂದ ಬೇಗ ಮುಂದೆ ಸಾಗು.) ಕಪಿಲ ಮುನಿಯ ನೆಲೆಯಾದ ಬಿಂದು ಸರೋವರದತ್ತ ಹೋಗು. ಕಪಿಲ ಮುನಿಯ ವಚನಾಮೃತದಂತೆಯೇ ಈ ಸರೋವರದ ನೀರೂ ಸಿಹಿಯಾಗಿದೆಯಂತೆ. ಮತ್ತೆ ಕಣ್ಣು ತಣಿಸುವ ಆಳವಾದ ಆ ಕೊಳದ ಮೇಲೆಲ್ಲ ದುಂಬಿಗಳು ಒತ್ತಾಗಿ ಹರಡಿದಾಗ, ನಡುವೆ ಬಿಳಿ ತಾವರೆಗಳು ಅರಳಿದಾಗ, ನಕ್ಷತ್ರಮಂಡಲದೊಡನೆ ಕದ್ದಿಂಗಳ ಆಗಸವನ್ನು ಕಂಡಂತೆ ಆಗುತ್ತದೆ.

Oh Brahmin! Move fast from there. You will find a pond called Bindu having water as sweet as the words of Lord Kapila. The pond is deep and feast to the eyes, appears like the black sky full of stars because of the spreading of bees on the white lotus filled in there.

**स्नात्वा कृत्वा समयविहितं तत्र पीत्वामृतान्यु-**
**द्गच्छेस्स्नास्यत्सुममृदुवपुर्गुर्जरीणां नितम्बैः ।।**

**गूढाकारैः परिमलिकुचैर्घट्टिताः वीचिवाराः**
**तत्पीनत्वं स्मरमदसमुल्लासिते तर्कयेयुः ॥ ३७॥**

बिन्दुसरोवरे मार्गक्लेशोपशमार्थं स्नानपानादि कार्यमित्याह । **स्नात्वेति** । विप्र ! तत्र स्नात्वा । समयविहितं तत्काले विधिविहितं स्वकर्म कृत्वा । अमृतानि जलानि । ''पयः कीलालममृतं'' इत्यमरः । पीत्वा । उद्गच्छेः सरसः सकाशा-दुत्तिष्ठन् याहि । उत् उपसर्गपूर्वकान् गम्लृ गतौ इति धातोः लिङ् । स्नानादिकं कृत्वैव शरीरपोषणार्थं पानभोजनादि कार्यमिति नियमानुसारेण रुक्मिण्यैवं प्रतिपादितम् । उक्तं हि -

अस्नात्वा चाप्यहुत्वा च भुङ्क्तेऽदत्वा च यो नरः ।
देवादीनां ऋणी भूत्वा नरकं प्रतिपद्यते । इति ।
अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चन । इत्यन्यत्र ।

यदा हि जले कश्चित्स्नानादि करोति तदा तत्र तरङ्गा भवन्तीति स्थितिः । तथैव विप्रेण स्नानादिकरणवेलायां सञ्जातांस्तरङ्गान् वर्णयति । **स्नास्यादित्या-दिना** । वीचिवाराः । वीचयः तरङ्गाः । ''भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः'' इत्यमरः । तासां वाराः मण्डलानि । 'वारः सूर्यादिवासरे । महे स्वरावसरयोर्वृन्दे' इति हेमः । अत्र वारशब्दस्थाने सङ्घ इति पाठान्तरमस्ति । त्वया उत्थापिता इति शेषः । स्नास्यन्तीनां, सुमवत् कुसुवत्, मृदु कोमलं वपुः यासां तासां गुर्जरीणां गुर्जरस्त्रीणां । नितम्बैः कट्याः पृष्ठभागैः । ''पश्चान्नितम्बः स्त्रीकट्या'' इत्यमरः । तथा गूढः निगूढः स्पष्टतया द्रष्टुमशक्यः आकारः संस्थानविशेषः येषां तैः । ''आकार इङ्गिताकृत्योः'' इति हेमः । आकृतिः संस्थानविशेष एव । परिमलः एषां अस्तीति परिमलिनः । ते च ते कुचास्तनाः तैः घट्टिताः ताडिताः सन्तः । तत्पीनत्वं तासां पुष्टताम् । स्मरमदस्य कामसुखस्य समुल्लासिते[1] क्रीडायां तर्कयेयुः अनुमिमीरन् । तर्कवितर्कणे लिङ् । यद्यपि गुर्जरस्त्रीणां कृशाङ्गित्वेन स्थौल्याभावात् स्तनानां पीनत्वं न लक्ष्यते । कञ्चुकादि-

---

१. समुल्लासिते इति ॥ उत्पूर्वकात् क्रीडार्थकात् लस धातोः स्वार्थे णिचि भावे क्तप्रत्यये रूपम् ॥

वस्त्राच्छादितत्वाच्च तदाकारो गूढ एव । तथापि तासां कामकेलीप्रावीण्यं सुममृदुल-वपुष्ट्वेनोह्यमिति तच्च स्पृशद्वीचिभिः तर्क्यते नान्यथेति भावः । विप्रस्य तत उद्गमन-निर्देशेन तेन तत्तर्कणं न क्रियते न च युज्यत इति च तदाशय इति बोद्धव्यम् । विप्रगमनानन्तरं तासां स्नानकरणात् । अत एव स्नास्यदिति भविष्यन्निर्देशः । अत्र उपमा उत्प्रेक्षा च ॥

ಅಲ್ಲಿ ಸ್ನಾನ-ಆಹ್ನೀಕ ಮಾಡಿಕೊಂಡು, ಬಾಯಾರಿಕೆ ನೀಗುವಂತೆ ಸಿಹಿನೀರು ಹೀರಿ, ಬೇಗ ಮೇಲೆದ್ದು ಹೊರಡು. ಆಗ, ಸ್ನಾನ ಮಾಡುತ್ತಾ ನೀ ಎಬ್ಬಿಸಿದ್ದ ಅಲೆಯಂತು ಎಲ್ಲೆಡೆ ಸಾಗುತ್ತ ಮತ್ತೊಂದೆಡೆ ಕುಸುಮ ಕೋಮಲ ಮೈಯುಳ್ಳ ಗುಜರಾತಿ ಹೆಂಗಸರು ಮೀಯುವಾಗ ಅವರ ನಿತಂಬದಿಂದ ಹಾಗು ಅಡಗಿರುವ ಸ್ತನಗಳಿಂದ ಡಿಕ್ಕಿ ಹೊಡೆಸಿಕೊಂಡು, ಅವರು ಹೊರಗೆ ಸೊರಗಿ ದಂತಿದ್ದರೂ ಕಾಮಕೇಳಿಯಲ್ಲಿ ಪರಿಪುಷ್ಟರಾಗಿರುವರೆಂದು ಊಹಿಸುತ್ತವಂತೆ. (ಅಲೆಗಳು ಇಷ್ಟು ತಿಳಿವುದರೊಳಗೆ ನೀನು ಬಲುದೂರ ಹೋಗಿರುತ್ತಿಯಂತೆ.)

In the pond you perform timely rituals and drink the sweet water after bath and come out of the pond. Then the waves created by your bath may guess the capacity of copulation of the bathing Gujarathi women, having flowerlike tender body by clashing with their hips and hidden fragrant breasts.

**किञ्चिद्दूरं परिसर ततो गोकुलं दृश्यते ते**
**गावः कृष्णारवमधुरितं वक्त्रमालोकयन्त्यः ॥**
**वत्सास्त्यक्त्वा यवसमशितं स्तन्यमालोलकर्णा**
**अम्बारावं विदधति मुहुर्बाष्पसंरुद्धकण्ठाः ॥ ३८ ॥**

**तत इति** । ततः अनन्तरम् किञ्चित् दूरं परिसर पर्यट । परि उपसर्गपूर्वकात् सृ गतौ इति धातोर्लोट् । गोकुलं दृश्यते त्वयेति शेषः । दृशिर् प्रेक्षणे कर्मणि लट् । तत्र कृष्ण इति आरवः शब्दः । 'आरवारावसंराव' इत्यमरः । तेन कृष्णा-रावेण मधुरितं[१] सञ्जातमाधुर्यम् । ते तव वक्त्रं मुखम् । आलोकयन्त्यः पश्यन्त्यः । गावः धेनवः अशितं जग्धम् । यवसं गवाद्यदनीयतृणविशेषम् । ''घासो यवसं''

१. मधुरितमिति ॥ तदस्य सञ्जातं तारकादिभ्य इतच् (५-२-३६)

इत्यमरः । त्यक्त्वा । एवं आलोकयन्तः वत्साश्च, स्तन्यं पीयमानापीनक्षीरं च त्यक्त्वा । आलोलाः आ अतिशयेन अलोलाः अचञ्चलाः स्तब्धा इति यावत् ''लोलश्चलसतृष्णयोः'' इत्यमरः । कर्णा यासां ताः । येषां ते इति वा । बाष्पेण संरुद्धः कण्ठः यासां ताः[१] । येषां त इति वा । मुहुः अम्बारावं अम्बा इति शब्दम् । विदधति कुर्वन्ति । वीत्युपसर्गपूर्वकात् डु धाञ् धारणपोषणयोरित्यतः लट् । वर्तमानसमीप्यादत्रानेकत्र लट्प्रयोग इति बोध्यम् । गोकुले स्थितानां गोवत्सादीनां श्रीकृष्णपोषितत्वेन तस्मिन् स्नेहातिशय इति, इदानीं तत्र कृष्णस्य वियोगात्, विप्रेण कृष्णशब्द उच्चरिते सति तन्मुखमेव तैर्दृश्यते । श्रीकृष्णस्मरणेन आहारादिकं त्यज्यते । किं पुनरिहागतः कृष्ण इति भावेन स्तब्धकर्णा भवन्ति । बाष्पं च प्रसृतं भवति । कण्ठश्च रुद्धो भवति । पुनः पुनरुत्साहेन अम्बारावश्च जायत इति भावः । एवं गोकुले गवामपि कृष्णपरत्वे किमुत मानवानां गोपीनां चेति मन्तव्यम् । अत्र काव्यलिङ्गम् । यवसाशितत्यागसमर्थनार्थं कृष्णारावमधुरितवक्त्रालोक-वर्णनात् ।।

ಓ ಬ್ರಾಹ್ಮಣ ! ಸ್ವಲ್ಪ ದೂರ ಸಾಗುತ್ತಿದ್ದಂತೆ ನಿನಗೆ ಗೋಕುಲವು ಕಾಣಸುತ್ತದೆ. 'ಕೃಷ್ಣ' ಎಂದು ಸವಿಯಾಗಿ ಶಬ್ದ ಮಾಡುವ ನಿನ್ನ ಮುಖವನ್ನು ಕಂಡ ಕೂಡಲೆ, ಆಕಳು ಮೇವುಣ್ಣದೆ, ಕರುಗಳು ಮೊಲೆಹಾಲುಣ್ಣದೆ, ಕಿವಿ ನಿಮಿರಿಸಿ, ಕಂಠ ಬಿಕ್ಕೊಂಡು ಕಣ್ಣೀರು ಸುರಿಸಿ, 'ಅಂಬಾ' ಎಂಬುದಾಗಿ ಬಹಳ ಕೂಗುತ್ತವೆ. (ಗೋಕುಲದ ಗೋವುಗಳಿಗೆ ಶ್ರೀ ಕೃಷ್ಣ ಎಷ್ಟು ಪ್ರಿಯನೆಂದು ಇದರಿಂದ ತಿಳಿಯುತ್ತದೆ.)

If you proceed a little further, will see Gokula. There on seeing your face which is chanting the name of Lord Krishna, the cows and calves will discard the fodder and breastmilk respectively and with the straightened ears, choked throats & tears they moo the sound "Amba"

**सङ्गीतं ते श्रवणसरणिं याति गोपाङ्गनानां**
**नृत्यन्तीनां हरिगुणकथासारपीयूषगर्भम् ।।**

---

१. संरुद्धकण्ठा इति ।। अङ्गगात्रकण्ठेभ्यो वक्तव्यमिति वा ङीषिति ङीषः वैकल्पिकत्वात् तदभावे रूपम् ।।

**नृत्ये यासां चलघनकुचेष्वङ्किता नाखलेखाः**
**शैलारूढा इव शशिकला भान्ति कृष्णेन पूर्वम् ॥३९॥**

गोकुलाद्बहिः प्रथमं गवां दर्शनम्। किञ्चित्समीपगमने तु सङ्गीतध्वनिः श्रूयत इति वर्णयति। **सङ्गीतमिति**। हे विप्र ! तत इति शेषः। नृत्यन्तीनां गोपाङ्गनानां गोपीनाम्। हरिकथा कृष्णकथा। सारं श्रेष्ठं यत्पीयूषं अमृतं इव हरिकथासारपीयूषं, गर्भे यस्य तत्। सङ्गीतं गानम्। ते तव। श्रवणयोः सरणिं पद्धतिम्। ''सरणिः पद्धतिः पद्या'' इत्यमरः। याति प्रविशति। नर्तनकाले गोपीनां स्थितिं वर्णयति। **नृत्य इति**। नृत्ये नर्तने सति। यासां गोपीनाम्। तासामिति पूर्वेणान्वयो ज्ञेयः। चलाः चञ्चलाः। घनाः सान्द्राः। ''घनः सान्द्रे दृढे दार्ढ्ये'' इति हेमः। कुचाः स्तनाः तेषु। पूर्वं कृष्णेन। अङ्किताः मुद्रापिताः। नाखलेखाः नखसम्बन्धिन्यः लिपयः। ''लेखा राज्यां लिपावपि'' इति हेमः। शैलं गिरिं आरूढाः। शशिकला इव द्वितीयाचन्द्रकला इव ते भान्ति भासन्ते। भा दीप्तौ लट्। स्त्रियो हि कुचाच्छादकवसने गलिते सति शीघ्रं तदाकर्षणेन पुरस्तदाच्छादने जागरूका इति लोकन्यायेऽपि अत्र गोपस्त्रियः न तथा दृश्यन्ते। अपि तु किञ्चित् व्यक्तमध्या इव नृत्ये रताः। तत्तु श्रीकृष्णकथामृतगर्भितसङ्गीतगायनरतत्वेनेति, ''गायन् विलज्जो विचरेदसङ्ग'' इति वाक्यानुरोधेन तासामियं चर्या श्लाघ्यत इति भावः। एवं कुचानां शैलाकारत्वेन, नखलेखानां चन्द्रकलाकारत्वेन उत्पत्तिकाले रक्तत्वेऽपि पश्चाद्धवलत्वेन च नर्तनकाले कुचचाञ्चल्येन तदङ्कितलेखानामपि चाञ्चल्यमिति तच्चारोहकर्मवद्भासत इति 'शैलारुढा इव शशिकला' इत्यस्य भावो ज्ञेयः। द्वितीयाचन्द्रदर्शनवत् तद्दर्शनमपि क्षणमात्र एव भवेत्। न हि सदा ताः व्यक्तमध्या। अपि तु कृष्णभक्तिरसोद्रेकातिशयकाल एव विस्मृतस्वात्मान इति तत्क्षण एव स्वमध्याच्छादनवसनाकर्षणादिष्वरता इति बोद्ध्यम्। एवं तासां कुचेषु अङ्कितानां लेखानां दर्शनस्य अकार्यत्वेऽपि यदि यत्नाभावेऽपि तद्दर्शनं भवेत् तदा ''ता चन्द्रलेखा चन्द्रकुलावतंसश्रीकृष्णनखचन्द्रसञ्जाता'' इति ध्यायतस्तद्दर्शनं द्वितीयाचन्द्रकलादर्शनमिव शुभकारकमेव स्यान्न दोषावहमित्यादिभावविशेषा निगूढा इत्यलम्। अत्रोपमालङ्कारः॥

(ಗೋಕುಲದ ಹೊರ ವಲಯದಲ್ಲಿ ಗೋವುಗಳ ಚಿತ್ರಣವಾದರೆ,) ಸ್ವಲ್ಪ ಮುಂದೆ ಹೋಗುತ್ತಿದ್ದಂತೆ, ಗೋಪಿಕೆಯರು ಕುಣಿಕುಣಿಯುತ್ತ, ಅಮೃತದಂತಿರುವ ಶ್ರೀ ಕೃಷ್ಣನ ಅನೇಕ ಗುಣಗಳ ವರ್ಣನಾವಿಲಾಸದಿಂದ ತುಂಬುತ್ತ, ಹಾಡುವ ಸಂಗೀತ ನಿನಗೆ ಕೇಳಿಸುತ್ತದೆ. ಕೃಷ್ಣನಲ್ಲೇ ಮೈ ಮರೆತು ಕುಣಿಯುವಾಗ, ಅವರ ಅಲ್ಲಾಡುವ ಸ್ತನಗಳ ಮೇಲೆ, ಹಿಂದೆ ಕೃಷ್ಣ ಮಾಡಿದ್ದ ಉಗುರಿನ ಗುರುತುಗಳು, ಬೆಟ್ಟ ಏರಿರುವ ಬಿದಿಗೆ ಚಂದ್ರಕಲೆಗಳ ಹಾಗೆ ತೋರುತ್ತವೆಯಂತೆ.

. In the Gokula you will hear the songs sung by the dancing Gopikas which contain only the nectar-like extract of the stories of Lord Krishna's virtues. When they dance, on their shaking breasts, the nail marks, made in past by Lord Krishna, look like the digit of the moon ascended on a mountain.

**श्रीकृष्णाङ्घ्रिप्रतिकृतिमयीं भूमिमालोकयन्त्यः**
**चुम्बं चुम्बं तदसितरजोनीलबिम्बाधरोष्ठ्यः ॥**
**चेतस्यन्तर्ज्वलितमुरभिद्विप्रयोगाग्निनिर्य-**
**द्धूमव्रातानिव बहुशुचा यत्र गोप्यो वमन्ति ॥ ४० ॥**

कासाञ्चिद्गोपीनां कृष्णकथागायननर्तनादिना विस्मृतान्तरत्वेऽथापरासां कृष्ण-विरहाग्नितप्तान्तरत्वेन सम्भूतां स्थितिं वर्णयति । **श्रीकृष्णेति** । काश्चित् गोप्यः । श्रीकृष्णस्य अङ्घ्रेः पादस्य या प्रतिकृतिः प्रतिरूपं तत्स्वरूपां[1] भूमिम् । श्रीकृष्ण-पादन्यासेन यत्र भुवि स्वपादचिह्नं कृतं तां भूमिमित्यर्थः । आलोकयन्त्यः पश्यन्त्यः सत्यः । कृष्णालाभेऽपि कृष्णपादचिह्नं तावत् लब्धमिति विचिन्त्येति शेषः । तां भूमिं चुम्बं चुम्बं[2] पुनः पुनः चुम्बित्वा । तस्याः भूमेः असितं श्यामं यद्रजः धूलिः तेन नीलाः, बिम्बवत् अधरोष्ठाः बिम्बाधरोष्ठा, यासां ताः इति तदसितरजोनील-बिम्बाधरोष्ठ्यः[3] सत्यः । चेतसि हृदये । अन्तः ज्वलितः यः मुरभिदः मुरारेः कृष्णस्य

---

१.प्रतिकृतिमयीमिति ॥ तत्प्रकृतवचने मयडिति (५-४-२१) मयड् । टित्वाद् ङीप् ।

२. चुम्बं चुम्बमिति ॥ चुबि वक्त्रसंयोगे इत्यस्य इदित्वान्नुमि चुम्ब् इत्यस्मात् 'आभीक्ष्ण्ये णमुल् च' (३-४-२२) इति णमुलि नित्यवीप्सयोरिति द्वित्वे रूपम् ।

३. बिम्बाधरोष्ट्य इति ॥ 'नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गा च' (४-१-५५) इति वा ङीष्।

विप्रयोगः विरह एव अग्निः, तस्मात् निर्यान्तः ये धूमास्तेषां व्रातान् समूहान्। बहुशुचा अत्यन्तशोकेन वमन्ति इव उद्गिरन्ति इव यत्र भान्ति। टु वमु उद्गिरणे लट्। तत्र गोकुले विप्रयोगस्य लीलाः पश्येः इत्युत्तरेणान्वयः। तथा च बिम्बवद्रक्ताधरोष्ट्योऽपि ताः कृष्णपादरजश्चुम्बनेन नीलाधरोष्ठ्यः सञ्जाता इति भावः। हृदयगतविरहाग्निः न मन्दः अपि तु पुनः पुनर्वर्धत इति भावेन तद्धूमोद्गमरूपतया तद्रजोवर्णनं कृतमिति बोद्धव्यम्। प्रियविरहातुराणां प्रियसम्बन्धिवस्तुन्येव दर्शनस्पर्शनचुम्बनादिप्रेमक्रिया भवतीति भावः। अत्र उत्प्रेक्षालङ्कारः॥

(ಕೃಷ್ಣವಿರಹದಿಂದ ಗೋಪಿಯರ ಸ್ಥಿತಿಗತಿಗಳು ಊಹಾತೀತ.) ಆ ಗೋಪಿಯರು ನೆಲದಲ್ಲಿ ಮೂಡಿದ್ದ ಶ್ರೀ ಕೃಷ್ಣನ ಹೆಜ್ಜೆ ಕಂಡರೆ, ಅದಕ್ಕೆ ಮತ್ತೆ ಮತ್ತೆ ಮುತ್ತು ಕೊಡುತ್ತಾರಂತೆ. ಆಗ ಅದರ ಕರಿ ಧೂಳು ಅವರ ಕೆಳ ತುಟಿಗೆ ಹತ್ತಿರುತ್ತದೆ. ಅದನ್ನು ನೋಡಿದರೆ, ಅವರ ಹೃದಯದಲ್ಲಿ ಹತ್ತಿ ಉರಿಯುತ್ತಿರುವ ಶ್ರೀ ಕೃಷ್ಣವಿರಹವೆಂಬ ಬೆಂಕಿ ಎಬ್ಬಿಸಿದ ಹೊಗೆಯನ್ನು ಗೋಪಿಯರು ಬಹಳ ಶೋಕದಿಂದ ವಾಂತಿ ಮಾಡುತ್ತಿರುವರಂತೆ ತೋರುತ್ತದೆ.

In Gokula, on seeing the black footprints, of Lord Krishna, on the ground the Gopikas kiss them deeply. The block dust stuck to their lower lip appears as if with uncontrollable sorrow they are vomiting the smoke arisen, out of the fire of separation from Lord Krishna, in their hearts.

**मुक्ताहारो विसृजति तनौ पाण्डिमानं स्तनाग्रात्**
**सङ्क्रान्त्युच्छ्वसनमरुता ताडितः कालिमानम्॥**
**एतन्मार्ष्टुं नयनयुगलाद्वारिधारा प्रवृत्ता**
**पश्येर्गोपीष्वनिशकलिता विप्रयोगस्य लीलाः ॥४१॥**

**मुक्ताहार इति**। मुक्तानां मौक्तिकानाम्। "मुक्ता मौक्तिकपुंश्चल्योः" इति हेमः। हारः माला। यद्यपि "हारो मुक्तावली" इत्यमरोक्तेः हारशब्दस्यैव मुक्ता-मालेत्यर्थो ज्ञायते। तथापि विशिष्टवाचकेत्यादिन्यायेन मालेत्येवार्थः युक्तः। तनौ स्वाश्रये गोपीदेहे। पाण्डिमानं[१] स्वपाण्डुरत्वम्। विसृजति त्यजति। वीत्युपसर्गपूर्वकात्

१. पाण्डिमानमिति॥ 'पृथ्वादिभ्य इमनिज्वा' (५-१-१२२) इति इमनिच्। कालिमान-मित्यत्राप्येवमेव॥

त्यज विसर्ग इति धातोः लट् । ततः उच्छ्वसनस्य मरुता उष्णवायुना । ताडितः सन् । स्तनाग्रात् चूचुकात् । कालिमानं तद्गतं कृष्णवर्णम् । सङ्गृह्णाति स्वीकरोति । समुपसर्गपूर्वकात् ग्रह उपादान इत्यतः लट् । एतत् कार्ष्ण्यम् । मार्ष्टुं परिहर्तुम् । नयनयुगलात् वारिधारा जलप्रवाहः । प्रवृत्ता भवति । हे विप्र ! गोपीषु अनिशं कलिताः[१] सञ्जाताः । विप्रयोगस्य विरहस्य । लीलाः पश्येः पश्य । दृशिर् प्रेक्षणे इति धातोः लिङ् । विरहतप्तानां देहः सितो भवतीति, नेत्राभ्यां अश्रुधारा सरीसरीतीति अवस्थाया वर्णनमेतत् । मुक्ताहारोऽपि तद्देहे कृष्णत्वेन दृष्टश्चेत् किमुत तनोर्धवलत्वं वाच्यमिति विरहातिशय ऊह्य इति भावः । एवं स्तनाग्रात् कालिमासङ्ग्रहात् चूचुकस्यापि । अत्र पूर्वार्धे परिवृत्तिः । ततश्चोत्प्रेक्षा ॥

ಬೆಳ್ಳನೆಯ ಮುತ್ತಿನ ಹಾರ, ತನ್ನ ಬಿಳುಪೆಲ್ಲವನ್ನು ಅವರ ಮೈಗೆ ಧಾರೆಯೆರೆಯುತ್ತದೆ. ಇದಲ್ಲದೆ ಸ್ತನದ ತುದಿಯಿಂದ ಕರಿಬಣ್ಣ ಗಳಿಸಿಕೊಂಡು, ವಿರಹಾಗ್ನಿಯ ಬಿಸಿಗೂಡಿದ ಅವರ ಉಸಿರಬಡಿತಕ್ಕೆ ಮತ್ತಷ್ಟು ಕಪ್ಪಾಗಿ ಹೋಗುತ್ತದೆಯಂತೆ. ಆ ಕಪ್ಪನ್ನು ತೊಳೆಯಬೇಕೆಂದು ಎರಡೂ ಕಂಗಳಿಂದ ನೀರ ಧಾರೆ ಹರಿಯುತ್ತದೆಯಂತೆ. ಗೋಪಿಯರಲ್ಲಿ ಶ್ರೀ ಕೃಷ್ಣವಿರಹ ನಡೆಸುವ ಆಟ ನಿತ್ಯವೂ ಬಗೆ ಬಗೆಯಾಗಿ ಸಾಗುವುದನ್ನು ನೀ ಅಲ್ಲಿ ಕಾಂಬೆಯಂತೆ.

Oh Brahmin! The pearl garland looks very dull on the bosom of the weeping Gopikas. It looks as though the pearls have given away all its whiteness to their body, and being hit by the heated respiration they (pearls) are taking away the blackness from the nipples. To wash this blackness, the tears are rolling down from both the eyes. Thus you will see the way in which the separation, from Lord Krishna, teases and plays with Gopikas.

**स्वेदो गण्डे नयनपयसा स्पर्धते चूचुकाग्र-**
**स्पन्दः स्पन्दैर्द्विजकुलमणे चेतसश्चाधरस्य ॥**
**बाह्वम्भोजे कलिततनिमा मध्यराजत्तनिम्ना**
**गोपी काचित्सममृगदृशा स्पर्धते नैव यत्र** ॥ ४२ ॥

१. अनिशकलिताः ॥ अनिशं कलिताः अनिशकलिताः । सुप्सुपेति समासः ॥

**स्वेद इति**। हे द्विजकुलमणे ! गण्डे कपोले। ''गण्डौ कपोलौ''इत्यमरः। स्वेदः स्वेदजलम्। नयनयोः पयसा जलेन सह स्पर्धते। चूचुकस्य स्तनाग्रस्य अग्रः उपरिगतः स्पन्दः किञ्चिचलनम्। कम्प इति यावत्। चेतसः मनसः। अधरस्य ओष्ठस्य च। स्पन्दैः सह स्पर्धते अहमुत्कृष्ट इति स्पर्धां करोति इति भावः। बाहुः एव अम्भोजं तस्मिन्। अत्र अम्भोजपदेन अम्भसिजातत्वयोगेन अम्भोजरूढ्यर्थकमलाधारत्वेन च नालः ग्राह्यः। हस्तकमलाधारो बाहुर्नालायित इति यावत्। तत्र कलिता सञ्जाता तनिमा कृशता। ''तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे'' इति मेदिनी। मध्ये देहमध्ये। ''मध्यम् चावलग्नं च मध्योऽस्त्री'' इत्यमरः। तत्र राजन् यः तनिमा तेन सह। स्पर्धते। एवं बहुत्र स्पर्धायामपि काचित् गोपी। समया स्वसमानया मृगदृशा मृगनयनया अन्यया साकम्। यत्र गोकुले। नैव स्पर्धते। स्पर्ध सङ्घर्षे लट्। तत्र गोकुले विप्रयोगस्य लीलाः पश्येति पूर्वेणान्वयः। गण्डे अश्रुधारापेक्षया स्वेदः अधिक इति, मनसः ओष्ठस्य च कम्पनापेक्षया चूचुकाग्रकम्पः अधिक इति, कृशोदर्या गोप्या मध्ये या कृशता तदपेक्षया बाहोः कृशतेति भावः। गोप्याः मृगदृशा सह स्पर्धाभावात् नेत्रं पिहितमिति भावो बोध्यः। अन्यथा नेत्रे विकसिते तु तत्स्पर्धाऽपि भवेदेव। गोपीनेत्रयोः तदपेक्षयोत्कृष्टत्वादिति विरहावस्थायां नेत्रं पिधायैव तरुणी वर्तत इति भावः। अत्र पर्यायोक्तसहोक्तिसङ्करः।

ಗೋಪಿಯರ ಕೆನ್ನೆಯ ಬೆವರು, ಕಣ್ಣೀರಿನೊಡನೆ 'ನಾ ಹೆಚ್ಚು ತಾ ಹೆಚ್ಚು' ಎಂದು ಸ್ಪರ್ಧಿಸುವುದಂತೆ. ಮೊಲೆ ತುದಿಯು, ನಡುಕುವುದರಲ್ಲಿ ಮನಸ್ಸು ಹಾಗು ಕೆಳತುಟಿಯೊಡನೆ ಸೆಣಸುವುದಂತೆ. ಕಮಲದ ನಾಳದಂತೆ ಇರುವ ತೋಳಂತು ಸೊರಗುವುದರಲ್ಲಿ ಉದರದೊಡನೆ ಪೈಪೋಟಿ-ಗಿಳಿವುದಂತೆ. ಆದರೆ, ಆ ಗೋಪಿಯು ಜಿಂಕೆಗಣ್ಣಿನ ಬೇರೆ ಚೆಲುವಿಯೊಡನೆ ಸ್ಪರ್ಧಿಸಲು ಇಳಿಯುವುದಿಲ್ಲವಂತೆ. (ಸದಾ ಕಣ್ಮುಚ್ಚಿ ಕುಳಿತಿರುವಳಂತೆ.)

Due to the painful separation, the sweat on the cheek of gopikas competes with the tears. The nipples compete with lower lip and mind in shivering. The stalk-like arms compete with the stomach in slimness. Though these many competitions are going on, the Gopikas would never compete with other fawn-eyed women (means gopika keeps her eyes closed).

**सर्पे हारे मलयपवने कालकूटे विषे वा**
**सूर्ये चन्द्रे शिखिनि विसरद्गन्धिलामज्जके वा ॥**
**साम्यं मत्वा गमितदिवसा जीवने वा मृतौ वा**
**गोपीः रक्ता अपि कलयसे चक्षुषा त्वं विरक्ताः ॥ ४३ ॥**

**सर्प इति** । सर्पे हारे । साम्यं मत्वेत्यनेन सम्बन्धः । एवमुत्तरत्रापि ज्ञेयम् । मलयः देशविशेषः गन्धवृक्षा यत्राधिकं जायन्ते स देश इति यावत् । ''मलयो देश आरामे शैलांशे पर्वतान्तर'' इति हेमः । तस्य पवने । स पवनः शीत इति भावः । अथ वा गोपीस्थाने मलयवायुलाभासम्भव इत्याशङ्कायां तु मलयोऽत्र आरामः ग्राह्यः । ''आरामः स्यादुपवनं'' इत्यमरः । उद्यानवायुरपि शीत इति ज्ञेयम् । तादृशे मलयपवने कालकूटे विषे । वा तथा । ''वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चय'' इति विश्वः । सूर्ये चन्द्रे । वा तथैव । शिखिनि अग्नौ विसरद्गन्धि-लामज्जके । विसरन् गन्धः अस्यास्तीति विसद्गन्धि । तच्च तत् लामज्जकं च तस्मिन् ''लामज्जकं लघुलयमवदाहेष्टकापथे'' इत्यमरः वीरषलतामूलमित्यर्थः । 'लावञ्चबेरु' इति कर्नाटकभाषायाम् । इदं च तापनिवारकं प्रसिद्धम् । वा तथा । जीवने वा जीवनेऽपि । मृतौ मरणेऽपि । साम्यं आकारसाम्यं फलकृतवैषम्याभावं च । मत्वा । गमितानि दिवसानि याभिस्ताः । गोपीः । रक्ता अपि कृष्णानुरक्ताः सतीरपि । त्वं चक्षुषा विरक्ताः सतीः कलयसे पश्यसि । श्रीकृष्णनुरक्तानां गोपीनां सर्पाद्भयं वा हारात् हर्षो वा न जायते । एवं मलयपवनान् चन्द्रात् च आह्लादः कालकूटात् सूर्यात् तापश्च न भवति । अग्नेर्दाहः लामज्जकात्तापपरिहारश्चेति नानुभूयते । जीवनं च मरणसममेव, कृष्णालाभादिति गोपीनां कृष्णानुरागेण प्राप्तां विरक्तावस्थां दृष्ट्वा सत्यमेव विरक्ता इति भ्रमो भवेदिति भावः । अथ वा भगवति अनुरक्तावेव विरक्तेः पक्वतेति तत्र विरक्तत्वेन दर्शनमेव युक्तमिति हार्दम् ॥ अत्र सर्पहारयोः सूर्यचन्द्रयोः शिखिलामज्जकयोश्च आकारसाम्यमप्यस्तीति, तेनापि साम्यदृष्टिश्शक्येति, तदा तथा दृष्टॄणां विरक्तता न युक्तेति च भावो ज्ञेयः । अत्र रक्तानां विरक्तत्वेन दर्शनं विरुद्धं समर्थनीयं समर्थ्यते तासां विरुद्धेषु साम्यदर्शनेनेति काव्यलिङ्गं विरोधाभासध्वनिश्च ॥

ಓ ವಿಪ್ರನೇ ! ಆ ಗೋಪಿಯರಿಗೆ ಹಾವು-ಹಾರ ಎರಡೂ ಒಂದೇ. ವಿಷ-ಅಮೃತ, ಸೂರ್ಯ-ಚಂದ್ರ, ಬೆಂಕಿ -ಲಾವಂಚ, ಬದುಕು-ಸಾವು ಎಲ್ಲವೂ ಒಂದೇ ಸಮವಂತೆ. ಹೀಗೆ ದಿನ ತಳ್ಳುವ ಆ ಗೋಪಿಯರು, ಶ್ರೀ ಕೃಷ್ಣನಲ್ಲಿ ಅತಿಶಯ ಅನುರಾಗ ತುಂಬಿದ್ದರೂ, ಬಹಳ ವಿರಾಗಿಗಳೆಂದು ನಿನ್ನ ಕಣ್ಣಿಗೆ ತೋರಬಹುದು.

The Gopikas kill the time everyday without differentiating between a snake and a garland; cool breeze and the Kalakuta poison; the sun and the moon; the fire and the fragrant tawny grass called Lavancha; the life and death. Thus the Gopikas appear to you like unattached even though they are attached to Lord Krishna.

**वेणीं बद्धां नियमयितुमुद्युञ्जते किञ्च नीवीं**
**ताम्बूलाङ्कं रसितमधरे कर्तुमार्द्रे रसेन ॥**
**पीनोरोजं मलयरजसा लिप्तमप्यादधानाः**
**स्वप्नाद्बुद्धा हरिरतहृदो यत्र माद्यन्ति गोप्यः ॥ ४४ ॥**

**वेणीमिति** । यत्र गोकुले । स्वप्नात् कृष्णेन सह सुरतक्रीडाविषयकात् स्वप्नात् । बुद्धाः प्रबुद्धाः । हरिरतहृदः श्रीकृष्णे एव निरतं हृदयं यासां ताः । गोप्यः बद्धां अपि वेणीं पुनः नियमयितुं । उद्युञ्जते उद्युक्ता भवन्ति । किञ्च बद्धामपि नीवीं कटिवस्त्रबन्धम् । पुनरपि नियमयितुं उद्युञ्जते । रसेन ताम्बूलरसेन आर्द्रे अधरे ताम्बूलाङ्कं ताम्बूलचिह्नम् । रसितं स्निग्धं कर्तुं पुनः उद्युञ्जते । उदुपसर्गपूर्वकात् युजिर् योगे इति धातोः लट् । मलयरजसा चन्दनेन । लिप्तमपि पीनोरोजं पीनस्तनं पुनः लिप्तं आदधानाः कुर्वाणाः गोप्यः माद्यन्ति हृष्टा भवन्ति । मदि हर्षे लट् । यत्र गोकुले तत्र एकां रात्रिं कलयेत्युत्तरेणान्वयः । तथा च स्वप्ने दृष्टमेव बाह्येऽपि सञ्जातमिति भ्रान्त्या गोप्य एवमाचरन्त्यः माद्यन्ति इति भावः । सुरतानन्तरं हि केशाः स्रस्ताः, नीवी शिथिलिता, अधरं चानार्द्रं, स्तनश्च लुप्तगन्धरसः भवतीति जानन्त्यः गोप्यः पुनः केशादीनां सुव्यवस्थां कर्तुं प्रवृत्ता भवन्तीति भावः । अत्र गम्यभ्रान्तिमदलङ्कारः ।

ಕೆಲವು ಗೋಪಿಯರಂತು, ಕಟ್ಟಿದ ಜಡೆಯನ್ನು ಮತ್ತೆ ತುರುಬು ಕಟ್ಟಲು ಹವಣಿಸುತ್ತಾರಂತೆ. ಬಿಚ್ಚದ ಸೀರೆಯ ನೆರಿಗೆಗಂಟನ್ನು ಮತ್ತೆ ಬಿಗಿಯುತ್ತಾರಂತೆ. ನೆಂದ ಕೆಳ ತುಟಿಗೆ ವೀಳ್ಯದ ರಸದಿಂದ ಕೆಂಬಣ್ಣದ

ಹೊಳಪು ರಸರಸವಾಗಿ ಕಾಣುವಂತೆ ಮಾಡಲು ತೊಡಗುತ್ತಾರಂತೆ. ಮತ್ತೆ ಗಂಧಲೇಪಗೊಂಡಿರುವ ದಷ್ಟ ಪುಷ್ಟವಾದ ದುಂಡುಮೊಲೆಗೆ ಮಲೆನಾಡಿನ ಸುಗಂಧದ ರಸವನ್ನು ಮತ್ತೆ ಸವರುತ್ತಾರಂತೆ. ಕನಸಿನಿಂದ ಎದ್ದ ಮೇಲೆ ಶ್ರೀ ಕೃಷ್ಣನಲ್ಲಿಯೇ ಹೃದಯವಿಟ್ಟ ಗೋಪಿಯರು ಅಲ್ಲಿ ಹುಚ್ಚರಂತೆ ವರ್ತಿಸುತ್ತಾರಂತೆ. ( ಕನಸಿನಲ್ಲಿ ಕೃಷ್ಣನೊಡನೆ ಸುರತವಾಡಿದ ಭಾವದಲ್ಲೇ ಎದ್ದಮೇಲೂ ಇರುವರೆಂದು ಭಾವವು )

The Gopikas tie their already knotted hair and frills; wetten the already wet lower lip with the sap of betel leaves and rub their already fragrant breasts with sandal paste. Thus the Gopikas after awakening from the dream of enjoyment with the Lord, being attached to him, look as if are still in the state of the dreams.

**रोमाञ्चाङ्के वदनकमलं न्यस्य हस्ते च केशान्**
**स्रस्तान् बाहौ सुमपरिमलान् सक्थिना सक्थि बद्ध्वा ॥**
**स्वप्ने कृष्णासमसुखपरिष्वङ्गमासादयन्त्यः**
**गायन्तं त्वां मुषसि कुपिता यत्र निन्दन्ति गोप्यः ॥ ४५ ॥**

**रोमाञ्चाङ्क इति** । रोमाञ्चाङ्के रोमाञ्चः पुलक एव अङ्कं चिह्नं यस्मिन् तादृशे । हस्ते करे । वदनं कमलमिव वदनकमलं । न्यस्य संस्थाप्य । सुमपरिमलान् सुमैः परिमलः सुगन्धः येषां तान् । स्रस्तान् केशान् बाहौ भुजे । न्यस्य । सक्थिना ऊरुणा । "सक्थि क्लीबे पुमानूरुः" इत्यमरः । सक्थि अपरोरुं । बद्ध्वा दृढं संयोज्य । स्वप्ने । कृष्णस्य, असमसुखं असमं सुखं येन तं, परिष्वङ्गं आलिङ्गनम्। आसादयन्त्यः प्राप्नुवत्यः । गोप्यः । उषसि प्रभातकाले । "प्रत्यूषोहर्मुखं कल्यमुषः प्रत्युषसी अपि । प्रभातं च" इत्यमरः । गायन्तं त्वां यत्र कुपिताः सत्यः निन्दन्ति। णिदि कुत्सायां लट् । बहिः कृष्णविरहतप्ता गोप्यः यदा हि स्वप्ने श्रीकृष्णेन साकं सुरतं कुर्वन्त्यः क्षणमात्रं सुखं प्राप्तास्तदा विप्रेण गाने कृते स्वप्नस्यावसानेन श्रीकृष्णवियोगावस्थां पुनरपि समागता गोप्यः कृष्णवियोगप्रापकोऽयं विप्र इति हेतोः निन्दन्ति इति भावः । तत्रापि उषःकालीनस्वप्नानां यथार्थत्वेन तद्भङ्गेन गोपीनां कोपातिशय इत्याद्याशयविशेषो ज्ञेयः । अत्र गायन्तमिति विशेषणं स्वप्नविघ्नकरमित्य-भिप्रायकमिति परिकरः । वदनकमलमित्युपमा ॥

ಕನಸಿನಲ್ಲಿ, ಶ್ರೀ ಕೃಷ್ಣನ ಬಿಗಿ ಅಪ್ಪುಗೆಯ ಪರಮಾನಂದದಲ್ಲಿ ಮುಳುಗಿದಾಗ, ಆ ಗೋಪಿಯರು ರೋಮಾಂಚಗೊಂಡ ಕೈಯಲ್ಲಿ ಮುಖ ಆನಿಸುತ್ತ, ಹೂ ಉದುರಿಸಿ ಸುವಾಸನೆಯ ಕೂದಲನ್ನು ಹೆಗಲಿಗೆ ಇಳಿಸುತ್ತ, ತೊಡೆಯಿಂದ ತೊಡೆಗೆ ಬಿಗಿದುಕೊಳ್ಳುತ್ತಾರಂತೆ. ಓ ಬ್ರಾಹ್ಮಣ ! ಈ ಕನಸು ಬೀಳುವ ಆ ಬೆಳಗು ಜಾವಕ್ಕೆ ಸರಿಯಾಗಿ, ಅಲ್ಲಿ ನೀನೇನಾದರೂ "ಉತ್ತಿಷ್ಠೋತ್ತಿಷ್ಠ ಗೋವಿಂದ" ಎಂದು ಗಟ್ಟಿಯಾಗಿ ಹೇಳಲು ಆರಂಭಿಸಿದರೆ, ಆ ಗೋಪಿಯರು ಸಿಡುಸಿಡುಕಿ ನಿನ್ನನ್ನು ಬೈಯ್ಯುತ್ತಾರೆ. ನಮ್ಮ ಕನಸನ್ನು ಕೆಡಿಸಿದನೆಂದು ದುರುಗುಟ್ಟುತ್ತಾರೆ. ಎಚ್ಚರ !

Supporting their cheek with the thrilled hand, spreading the scattered fragrant hair on shoulders, and binding both the laps together, Gopikas while enjoying the pleasurable embrace of Lord Krishna in dreams, if you sing loudly in the early morning they definitely will curse you.

**रात्रीमेकां कलय वसतिं तत्र विश्रान्तिकामः**
**तस्यादूरे लसति यमुनानाम राज्ञी नदीनाम् ॥**
**यस्यां यादश्चलनवलनोत्क्षेपितान् बिन्दुसङ्घान्**
**तारासङ्घानिव दिवि समालोकसे भूसुरेश ॥ ४६ ॥**

**रात्रीमिति** । तत्र गोकुले । विश्रान्तिकामः विश्रान्तेः यात्रायासोपशमस्य काम इच्छा यस्य तादृशः त्वम् । एकां रात्रीम्[१] । वसतिं वासम् । कलय कुरु । तस्य गोकुलस्य । अदूरे समीपे यमुना नाम नदीनां राज्ञी लसति शोभते । लस श्लेषण-क्रीडनयोर्लट् । यमुनां वर्णयति । **यस्यामिति** । भूसुरेश त्वम् । यस्यां यमुनानद्याम् । यादसां जलचराणाम् । "यादांसि जलजन्तवः" इति अमरः । चलनवलनेभ्यः उत्क्षेपितान् बिन्दुसङ्घान् । दिवि तारासङ्घान् इव नक्षत्रसमूहानिव। समालोकसे सम्यक् पश्यसि । सम् आङ् इत्युपसर्गद्वयपूर्वकात् लोकृ दर्शन इति धातोर्लट् । तादृशी यमुनेति पूर्वेणान्वयः । अत्र उपमालङ्कारः ॥

ಓ ಬ್ರಾಹ್ಮಣ ! ವಿಶ್ರಾಂತಿಗಾಗಿ ಒಂದು ರಾತ್ರಿ ಮಾತ್ರ ಅಲ್ಲಿರು. ಮತ್ತೆ ಬೆಳಗಾಗುತ್ತಿದ್ದಂತೆ, ಆ

---

१. रात्रीमिति ॥ 'कृदिकारादक्तिनः' इति गणसूत्रात् वा ङीष् । तथा च रा धातोः 'राशदिभ्यां त्रिप्' इति औणादिकत्रिप्प्रत्यये ङीषि सति रात्रीति रूपम् ॥

ಗೋಕುಲದ ಹತ್ತಿರವೇ ಹರಿಯುವ ಹೊಳೆಗಳ ಅರಸಿಯಾದ ಯಮುನಾ ನದಿಯನ್ನು ನೋಡು. ಕಪ್ಪಾದ ಆ ನದಿಯಲ್ಲಿ ಜಲಚರ ಜಂತುಗಳು ಎಬ್ಬಿಸಿದ ಸಾವಿರಾರು ಹನಿಗಳು ಮೇಲೆ ಹಾರಿದಾಗ, ಆಗಸದಲ್ಲಿ ನಕ್ಷತ್ರ ಪುಂಜವೇ ತೋರಿದಂತಾಗುತ್ತದೆ.

Oh Brahmin! Rest yourself for a night there. Near the Gokula flows the big river Yamuna the queen of rivers where you can see the thousands of water drops, sprinkled up by the marine animals, look like constellation in the sky.

**सन्त्येवास्मिन् जगति बहवः पावयन्त्यस्तटिन्यः**
**तासां मध्ये मम तु महती लालसास्यां तटिन्याम् ॥**
**यस्यास्तीरेऽकलयत हरिर्मुग्धगोपाङ्गनाभिः**
**रासक्रीडां कुलमृगदृशां मानसं स्पन्दयन्तीम् ॥ ४७॥**

**सन्तीति** । अस्मिन् जगति । पावयन्त्यः पावित्र्यं ददत्यः । तटिन्यः नद्यः । ''तटिनी ह्रादिनी धुनी'' इत्यमरः । बहव[१] एव सन्ति । तासां मध्ये मम तु अस्यां नद्यां यमुनायाम् । महती लालसा अतिशयिताभिलाषः । ''कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः'' इत्यमरः । कुत इत्यत हेतुगर्भं वर्णनमाह । **यस्या इति** । यस्या यमुनायाः । तीरे तटे । हरिः कृष्णः । मुग्धाभिः वेणुनादेन अकृष्टाभिः गोपाङ्गनाभिः सार्धम् । कुलमृगदृशां कुलस्त्रीणाम् । मानसं स्पन्दयन्तीं कम्पयन्तीम् । रासक्रीडां अकलयत । तस्यां यमुनायां महती लालसेति पूर्वेणान्वयः । तथा च यमुनातीरे हरिः अङ्गनानां स्वाङ्गसौख्यं प्रददाविति, ममापि तत्प्राप्त्यर्थं एतन्नदीतीर एवादृष्टस्थलं स्यादिति धिया अस्यां नद्यां लालसेति रुक्मिण्याशयो बोध्यः । गोपाङ्गनेभ्यःप्रदत्तं रासक्रीडामहोत्सवं श्रुत्वैव मम मनः स्पन्दितं सत् श्रीकृष्णासक्तमित्याकूतं सूचयति कुलमृगदृशां मानसं स्पन्दयन्तीमिति विशेषणेन । तेन च ''मया सह तां रासलीलां कर्तुं कृष्णस्योत्साहः अत्रैव स्यादिति धियापि यमुनायां मम लालसेति'' रुक्मिण्या भावो ज्ञेयः। अत्र काव्यलिङ्गालङ्कारः ॥

---

१. बहव इति ॥ 'बह्वादिभ्यश्च' (४-१-४५) इति वा ङीष् ।

ಓ ವಿಪ್ರ ! ಈ ಜಗದೊಳಗೆ ಜನರನ್ನು ಪವಿತ್ರಗೊಳಿಸುವ ನದಿಗಳು ಬಹಳಷ್ಟು ಇವೆ. ಆದರೆ ಅವುಗಳ ನಡುವೆ ನನಗೆ ಈ ಯಮುನೆಯೇ ಹೆಚ್ಚು ಅಚ್ಚುಮೆಚ್ಚಾಗಿದೆ. ಶ್ರೀ ಕೃಷ್ಣನು ಮುಗ್ಧ ಗೋಪಿಯ ರೊಡನೆ ಜೊತೆಗೂಡಿದ್ದು ಹಾಗು ಕುಲವಧುಗಳ ಹೃದಯವನ್ನೂ ಕದಡುವಂತೆ ರಾಸಲೀಲೆ ನಡೆಸಿದ್ದೂ ಸಹ ಈ ನದಿಯ ತೀರದಲ್ಲೇ ಆಯಿತಷ್ಟೆ

Even though there are many purifying rivers in this world, I have deep affection for this river because it is on the bank of this river that Krishna played and danced (Rasakreeda) with innocent loving Gopikas, which (Rasakreeda) perturbed the minds of even high caste ladies.

**यं यं भावं हृदि कलयते तं तमाप्नोति योगी-**
**त्येवं श्रुत्या स्मृतिसमुदयैर्वर्णितं शास्त्रकृद्भिः ॥**
**नार्यप्येषा तदिह भगवन् साधयामास यस्मात्**
**कृष्णावासादनिशकलिताद्भाति कृष्णीभवन्ती ॥ ४८ ॥**

**यं यमिति** । योगी हृदये यं यं[१] भावं भावनाम् । कलयते धरति । तं तं तादृशभावानुगुणमेव स्वभावं आप्नोति । आप्लृ व्याप्तौ लट् । इत्येवं श्रुत्या ''तं यथा यथोपासते तथैव भवति'' इति श्रुत्या । स्मृतिसमुदयैः स्मृतिसमूहैः । ''समुदायः समुदयः समवायश्चयो गण'' इत्यमरः ।

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः । इति ।
यादृशो भावितस्त्वीशः तादृशो जीव आभवेत् ।

इत्यादिस्मृतिभिरित्यर्थः । शास्त्रकृद्भिः शास्त्रकारैः । वर्णितं प्रतिपादितं वर्तते । परं तु तैस्तत्प्रसाध्य न निरूप्यते । भगवन् हे पूज्य विप्र ! एषा यमुना तु । नारी अपि तत् प्रमेयं साधयामास साधितवती । कुत इत्यत आह । **यस्मा-दिति** । यतः अनिशं कलितात् । कृष्णस्य आवासात् । सा यमुना कृष्णीभवन्ती

१. यं यमिति ॥ नित्यवीप्सयोरिति द्वित्वम् ।

सती अकृष्णा कृष्णा भवन्ती[१] । भाति भासते । तस्मात् एषा साधयामास इति युक्तम् । यमुना कृष्णवर्णेति प्रसिद्धम् । तत्तु कृष्णावासनिमित्तमिति भावः । अथ वा कृष्णसहवासः गोपीनामप्यासीत् । तथापि न कृष्णा अपि तु पाण्डुरा इति यमुना एव श्रुतिस्मृतिप्रतिपादितार्थं साधितवतीति भावः । एवं केवलं प्रवचनापेक्षया तत्सिद्धिरेवगरीयसीति शास्त्रकृद्भ्यः यमुना एवोत्कृष्टेति च भावो ज्ञेयः । अत्र अर्थान्तरन्यासः गम्योत्प्रेक्षासाङ्कर्यञ्च ॥

ಓ ಪೂಜ್ಯ ! "ಯೋಗಿಯು ಯಾವ ಯಾವ ಭಾವನೆಯನ್ನು ಹೊಂದಿರುತ್ತಾನೊ, ಮುಂದೆ ಅದೇ ರೀತಿಯ ಫಲವನ್ನು ಅನುಭವಿಸುತ್ತಾನೆ" ಎಂದು ಶ್ರುತಿ-ಸ್ಮೃತಿಗಳ ಆಧಾರದಿಂದ ಶಾಸ್ತ್ರಕಾರರೆಲ್ಲ ಬಾಯಲ್ಲಿ ಹೇಳಿದರೆ, ಈ ಹೆಣ್ಣುಮಗಳು ಯಮುನೆ ಅದನ್ನು ಕೃತಿಯಲ್ಲಿ ಸಾಧಿಸಿ ತೋರಿಸಿದಳಂತೆ. ನಿತ್ಯವೂ ಶ್ರೀ ಕೃಷ್ಣ ಸನಿಹದಿಂದ ತಾನೂ ಕೃಷ್ಣೆಯೇ (ಕಪ್ಪು) ಆಗಿದ್ದಾಳಂತೆ.

"Whichever the form is filled in heart, a Yogi will attain the same form" is the statement of scholars by the quotes of Shruti & Smruti. Yamuna, even though a lady has shown this by practically achieving, as she became "Krishne" by having the dark colour of Lord Krishna because of his long lasting proximity.

**श्रीकृष्णेन ग्रहणरुचिना नातिदूरेनुयाताः**
**बाहूल्लासस्वनितमुरसा वारि धीरं तरन्त्यः ॥**
**वीचीघर्षाद्गलितवसनांश्चालयन्त्यो नितम्बान्**
**गोप्यो यस्यां बभुरिव रतव्युत्क्रमे बद्धकामाः ॥ ४९ ॥**

यमुनां वर्णयितुं तत्र वृत्तां कृष्णलीलां प्रतिपादयति । **श्रीकृष्णेनेति** । ग्रहणे रुचिः स्पृहा यस्य तेन । "अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिःस्त्रियां" इत्यमरः । श्रीकृष्णेन । नातिदूरे स्वल्पसमीपे । अनुयाताः अनुसृताः । (ततः) बाहूनां उल्लासेन प्रसारेण स्वनितं शब्दितम् । वारि जलम् । उरसा वक्षसा । धीरं धैर्येण तरन्त्यः । वीचीनां तरङ्गानां घर्षात् सङ्घर्षात् । गलितानि वसनानि येभ्यस्तान् । नितम्बान्

---

१. कृष्णीभवन्ती ॥ अकृष्णा कृष्णा भवन्ती कृष्णीभवन्ती । अभूततद्भावे च्विः ॥

कटिपृष्ठभागान्। चालयन्त्यः चञ्चलान् विदधानाः। गोप्यः यस्यां यमुनायाम्। रतस्य सुरतस्य व्युत्क्रमे ऊर्ध्वाधरीकाररूपेणानुष्ठाने। बद्धकामा इव निबद्धापेक्षा इव बभुः। भा दीप्तौ लिट्। तस्या अस्या यमुनाया इत्युत्तरेण अन्वयः। अयं भावः। एकदा कृष्णः गोपीः ग्रहीतुं धावतीः ताः पृष्ठतः अनुजगाम। कृष्णे समीप आगते 'स नो गृह्णीयात्' इति मत्वा गोप्यः यमुनायां प्रविष्टाः। तत्रापि कृष्णे समागते यमुनायां बाहूल्लासेन तारणक्रियां विदधाना जले उरः निधापयन्त्यः बभूवुः। तदा यमुनाया वीचिभिः नितम्बाच्छादकवस्त्रं गलितमिति, उरसा तारणक्रियायां च नितम्बचलनं भवेदेवेति तासां स्थितिः व्युत्क्रमसुरतासक्तकामिन्यवस्थोपमिता भवति। अधस्तात् नारी उपरिष्टात् पुरुषः प्रवृत्तश्चेत् स रतिसक्रमः। यदि पुरुष अधस्ताच्छयानः, नार्युपरिस्थिता भवति स रतव्युत्क्रम इति प्रकृतेऽपि तथाऽभूदिति भावः। एवं च रतव्युत्क्रमे बद्धकामा गोपीः कृष्णः जले प्रविश्य तासामधस्तादागत्य जग्राहेति भावो ज्ञेयः। केवलं स्त्रियः वैपरीत्येन शयनेन रतव्युत्क्रमासम्भवादिति। अत्र उत्प्रेक्षालङ्कारः॥

(ಈ ಯಮುನೆಯಲ್ಲಿ ಹಿಂದೆ ಶ್ರೀ ಕೃಷ್ಣ ಗೋಪಿಯರೊಡನೆ ವಿಧವಿಧವಾಗಿ ಆಟವಾಡಿದ್ದಾನೆ.) ಒಮ್ಮೆ ಹಿಡಿಯುವ ಕೀಟಲೆ ಮಾಡುತ್ತ ಶ್ರೀಕೃಷ್ಣ ಬೆನ್ನಟ್ಟಿ ಬಂದಾಗ, ಈ ಗೋಪಿಯರು ಸ್ವಲ್ಪ ದೂರ ಓಡುತ್ತ, ಈ ನದಿಗೆ ಧುಮುಕಿದರಂತೆ. ತೋಳುಗಳಿಂದ ಮುಂದೆ ಚಾಚುತ್ತ, ಸಪ್ಪಳಗೊಳಿಸುತ್ತ, ಎದೆ ಹಚ್ಚಿ ದಿಟ್ಟವಾಗಿ ಈಜಿದರಂತೆ. ಆಗ ಅಲೆಯ ಹೊಡೆತಕ್ಕೆ ಬಟ್ಟೆ ಜಾರಿಸಿಕೊಂಡ ಅವರ ನಿತಂಬಗಳು ಅಲುಗಾಡುವುದನ್ನು ನೋಡಿದರೆ, ಆ ಗೋಪಿಯರು ತಿರುಗುಮುರುಗಾಗಿ ಸಂಭೋಗವನ್ನು ಬಯಸಿದಂತೆ ಕಾಣುತ್ತಿತ್ತಂತೆ. (ಅಂದರೆ ಶ್ರೀ ಕೃಷ್ಣ ಈಜುವ ಆ ಗೋಪಿಯರನ್ನು ನೀರೊಳಗೆ ಮುಳುಗಿ ಕೆಳಗಿಂದ ಬಂದು ಹಿಡಿಯುತ್ತಿದ್ದನೆಂದು ಭಾವವು.)

Oh Brahmin! When Gopikas are being chased by Lord Krishna who was at a short distance to catch them, they jumped into the river and started swimming, creating more noise in the water by stretching their arms. Because of the movement of their posteriors, having slipped dress due to the friction with the water current, it looks as though the Gopikas want to have copulation in reverse fashion.

**कृत्वा हारं हसति कुचयोः कीर्णवार्बिन्दुजालैः**
**हस्ताम्भोजैर्व्रजमृगदृशः शीकरान् मौक्तिकाभान् ।।**
**कृष्णे लाजानिव निविशति स्वान्तरङ्गाङ्गणान्तः**
**पुष्पासारानिव समकिरन् यत्र मीनाङ्कबाणान्     ।। ५० ।।**

पुनर्यमुनायां कृष्णकृतलीलां वर्णयति । **कृत्वेति** । यत्र यमुनायाम् । कीर्णैः क्षिप्तैः । वारां जलानां बिन्दूनां जालैः समूहैः । कुचयोः हारं कृत्वा हसति कृष्णे । स्वान्तरङ्गं एव स्वचित्तमेव अङ्गणं प्राङ्गणम् । ''अङ्गनं प्राङ्गणे याने'' इति विश्वः । अङ्गनशब्दवत् अङ्गणशब्दोऽपि व्युत्पादितोऽमरव्याख्यायामिति बोद्धव्यम् । तस्य प्राङ्गणस्य अन्तः । निविशति प्रवेशं कुर्वति सति । व्रजस्य मृगदृशः मृगाक्ष्यः गोप्यः । हस्ताम्भोजैः हस्ता अम्भोजानीव तैः । मौक्तिकस्य आभा इव आभा येषां तान् । शीकरान् वातप्रक्षिप्तजलकणान् ''शीकरं सरले वातसृताम्बुकणयोः पुमान्'' इति मेदिनी । मीनाङ्कानां मीनस्य चिह्नं येषां तेषां नेत्राणाम् । बाणान् कटाक्षबाणान् । स्त्रीकटाक्षः मीनाङ्कस्य मन्मथस्य बाण इति भावः । तान् पुष्पासारान् इव पुष्पधारा इव । ''धारा सम्पात आसार'' इत्यमरः । समकिरन् प्राक्षिपन् । समुपसर्गपूर्वक कृ विक्षेपे लङ् । अस्या यमुनाया इत्युत्तरेण अन्वयः । जलक्रीडासन्दर्भे कृष्णः यदाञ्जलिपूर्णजलं गोप्या गले प्राक्षिपत् तदा सा वारिधारा गलादधः भागद्वयात्मना स्रवन्ती कुचयोरुपरि हारायितेति, तद् दृष्ट्वा कृष्णो जहास । हसन्मुखं प्रदर्श्य स्वहृदयं प्रविशति कृष्णे गोप्यः नववधूचितव्यापारं चक्रुः । यथा हि कन्या गले मालां विन्यस्य स्वपतित्वमापन्ने कदाचित् श्वशुरगृहगतां स्वां द्रष्टुं गृहाङ्गणं प्रविशति पुरुषे सा तरुणी हस्ताम्भोजैः लाजापुष्पादिवृष्टिं विधाय स्वप्रेमदृष्टिं न्यस्यति तथात्र गोपीभिराचरितमिति ध्येयम् ।। अथ वा मालार्पणतण्डुलवृष्ट्यादिघटितोयमुत्सवः विवाहसदृश इति भावः । अत्र उपमालङ्कारः । मीनाङ्कबाणान् इत्यत्र अतिशयोक्तिः ।।

ಶ್ರೀ ಕೃಷ್ಣನು ಆ ಗೋಪಿಯರ ಎದೆಗೆ ನೀರಧಾರೆಯಿಂದ ಹಾರಹಾಕುತ್ತ ಕಿರುನಗೆ ಬೀರುತ್ತ, ಅವರ ಹೃದಯಾಂಗಣಕ್ಕೆ ಲಗ್ಗೆ ಇಟ್ಟಾಗ, ಗೋಪಿಯರು ತಾವರೆಯಂತಹ ಬೊಗಸೆ ತುಂಬ ಹನಿಮುತ್ತುಗಳನ್ನು ಎರಚಿದರೆ ಅದು ಭತ್ತದಅರಳು ಹಾಕಿದಂತಾಯಿತಂತೆ. ಮತ್ತೆ ಆ ಮೀನಾಕ್ಷಿಯರ ನೋಟವು

ಮೀನಧ್ವಜನ (ಕಾಮನ) ಹೂಬಾಣದ ಮಳೆಯಂತೆ ಶ್ರೀ ಕೃಷ್ಣನ ಮೇಲೆ ಸುರಿಯುತ್ತಿತ್ತಂತೆ. ( ಹಾರ ಹಾಕಿದ ವರನಿಗೆ ವಧು ಅರಳು-ಹೂಗಳನ್ನು ಹಾಕುವ ಮದುವೆಯ ದೃಶ್ಯದಂತೆ ಈ ಸನ್ನಿವೇಶ ಇದೆಯೆಂದು ಕವಿಯ ಭಾವವು )

Forming a garland on the bosom by the scattered drops, when the smiling Krishna entered their hearts the Gopikas poured on him a handful of pearls-like shining water drops as if pouring popcorn. They also showered the sight of their fish-like large eyes on him like showering of flowers which are the arrows of cupid.

**कस्याः कूलेऽकलयदनिशं कामकेलीर्मुरारिः**
**कस्यै प्रादात्तपसि निरतैरप्यगम्यं स्वरूपम् ॥**
**पादाद्दन्तात्कलितजनुषो नाकलोकात्पतन्त्यः**
**स्रोतस्विन्यः कथमिव तुलालेशमस्या भजेरन् ॥ ५१ ॥**

एवं यमुनायां श्रीकृष्णकृतरासलीलां संवर्ण्य तत एव यमुनाया माहात्म्यातिशयं प्रतिपादयति । **कस्या इति** । मुरारिः श्रीकृष्णः । कस्या नद्याः । कूले तीरे । ''कूलं रोधश्च तीरं च'' इत्यमरः । अनिशं सदा । कामकेलीः कामक्रीडाः । ''द्रवकेलि-परीहासाः क्रीडा खेला च नर्म च ।'' इत्यमरः । अकलयत् अकरोत् ? तपसि निरतैरपि ऋषिभिरपीत्यर्थः । अगम्यं अलभ्यम् । स्वरूपं स्वस्य रूपम् । कस्यै नद्यै प्रादात् ? पादात् दन्तात् कलितं जनुः यासां ताः कलितजनुषः । नाकलोकात् स्वर्गलोकात् । पतन्त्यः । स्रोतस्विन्यः[1] इतरनद्यः । अस्याः एतत्प्रश्नोत्तरभूताया यमुनायाः तुलालेशं सादृश्यलेशं यत्किञ्चित् साम्यमित्यर्थः । ''तुला सादृश्यमानयोः'' इति विश्वः । कथमिव भजेरन् ? कथं हि प्राप्नुयुः । भज सेवायां लिङ् । न कथमपीत्यर्थः । कथमित्यस्य केन प्रकारेणेत्यर्थः । तत्र प्रकारस्य अल्पत्वं प्रतिपादयितुं इवेत्युक्तिः । ''आवर्जिता किञ्चिदिव स्तनाभ्यां'' इत्यादाविव ईषदर्थे इवशब्दः । तथा च अल्पेनापि प्रकारेण तुलालेशः न लभ्यते ताभिर्नदीभिरिति तदर्थः । विष्णुपादोद्भवा गङ्गा ।

१. स्रोतस्विन्य इति ॥ अस्मायामेधास्रजो विनिः (४-२-१२१) इति सूत्रेण असन्तस्य 'स्रोतस्' शब्दस्य विनिप्रत्यये ङीपि च रूपम् ॥

दन्तोद्भवा तु तुङ्गा । गङ्गास्नानं तुङ्गापानमिति लोकवाक्यम् । तथापि यमुनाया इव तयोर्न कृष्णलीलालाभ इति तत्साम्याभाव एव । तत्रापि गङ्गा स्वर्गात् पतिता । न हि पतिताः श्लाघ्या इति भावः । अथवा गङ्गा नाकलोकादवतीर्णा सुरनदीति तन्माहात्म्येऽपि न यमुनासाम्यमिति भावः ।। अत्र असमालङ्कारः । काव्यलिङ्ग-परिकरसङ्करश्च ।।

ಶ್ರೀ ಕೃಷ್ಣನು ಯಾವ ನದಿಯ ತೀರದಲ್ಲಿ ಕಾಮಕೇಳಿ ನಡೆಸಿದನೊ, ಮತ್ತೆ ಕಠಿಣ ತಪಸ್ಸು ಮಾಡಿದರೂ ದೊರೆಯದ ತನ್ನ ರೂಪವನ್ನು ಯಾವ ನದಿಗೆ ಸುಲಭ ಸಿಗುವಂತೆ ಮಾಡಿದನೋ, ಅಂಥ ಈ ಯಮುನೆಗೆ, ಕಾಲಿನಿಂದ ಹಲ್ಲಿನಿಂದ ಹುಟ್ಟಿದ ನದಿಗಳು (ಗಂಗೆ-ತುಂಗೆ) ಸ್ವಲ್ಪವಾದರೂ ಸಾಟಿಯಾಗಲು ಸಾಧ್ಯವಿದೆಯೆ? ಅದು ಸ್ವರ್ಗದಿಂದ ಇಳಿದು ಬಂದರೂ ಈ ನದಿಗೆ ಸಮವಾಗಲಾರದು.

On the bank of which, Lord Krishna played the game of love and to whom he gave himself, which is unattainable even by the hard practice of penance. How such Yamuna's similarity can be achieved even to a little extent by the other rivers, even though born from the teeth & foot of the lord (Ganga & Thunga) and flew from heaven?

**आरादस्याः नयनसुभगं पश्य गोवर्धनाद्रिं**
**यं पुष्पौघैरिव पुलकितं वर्षवार्भिर्विलोक्य ।।**
**हस्ताम्भोजे वनमृगदृशः कन्दुकाभं मुरारे-**
**रीक्षन्ते स्म स्वकुचयुगलं सञ्चलच्चूचुकाग्रम् ।। ५२ ।।**

**आरादिति** । अस्याः यमुनायाः । आरात् समीपे । ''आराद्दूरसमीपयो'' रित्यमरः । नयनसुभगं नयनयोः सुदृश्यम् । गोवर्धन इति अद्रिः तम् । पश्य । दृशिर् प्रेक्षणे लोट् । गोवर्धनं वर्णयति । **यमिति** । पुष्पौघैः इव पुष्पसमूहैः इव । पुष्पधाराभिः इति वा । ''ओघो वृन्देऽम्भसां रये'' इत्यमरः । वर्षस्य वृष्टेः । ''वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु ।'' इति मेदिनी । इन्द्राज्ञप्तमेघकृतवृष्टेः वार्भिः जलैः । पुलकितं[१] सञ्जातरोमाञ्चम् । यं गोवर्धनाद्रिम् । मुरारेः कृष्णस्य । हस्तः अम्भोजमिव तस्मिन् ।

---

१. पुलकितमिति ।। पुलकः सञ्जात अस्य पुलकितं अद्रिम् । तदस्य सञ्जातमिति इतच् ।।

कन्दुकस्य आभा इव आभा यस्य तं[1] सन्तम् । विलोक्य । वनमृगदृशः हरिणाक्ष्यः स्त्रियः इति यावत् । सञ्चलच्चूचुकाग्रं चूचुकयोः स्तनाग्रभागयोः अग्रौ चूचुकाग्रौ । सञ्चलन्तौ चूचुकाग्रौ यस्य तत् । स्वकुचयोः युगलम् । ईक्षन्ते स्म अपश्यन् । कृष्णकरे कन्दुकाभं गोवर्धनं दृष्ट्वा तत्सारूप्यं स्वकुचेऽपश्यन्नित्यर्थः । कृष्णः गोवर्धनमिव कुचमप्येवं यदा जग्राह तदा कुचस्यापि पुलकः तत्सूचकचूचुकाग्रस्पन्दश्च जात इति तत्स्मरणेन इदानीमपि स पुलक आयात इति तद्दर्शनं चक्रुरित्यर्थः । अत्र दृष्टान्तालङ्कारः ॥

ಇದರ ಹತ್ತಿರವೇ ಕಣ್ಣಿಗೆ ಹಬ್ಬವಾದ ಗೋವರ್ಧನ ಗಿರಿಯನ್ನು ನೋಡು. ಇಂದ್ರನ ಮಳೆ ನೀರೆಲ್ಲ ಅದಕ್ಕೆ ಹೂಮಳೆಯಂತಾಗಿ ಪುಳಕಗೊಳಿಸಿತು. ತಾವರೆಯಂಥ ಕೃಷ್ಣನ ಕೈಯಲ್ಲಿ ಚೆಂಡಿನಂತೆ ಆ ಗೋವರ್ಧನವನ್ನು ಕಂಡ ಕಾಡಿನ ಬೆಡಗಿಯರು, ತುದಿ ಅಲುಗಿಸುವ ತಮ್ಮ ಎರಡೂ ಸ್ತನಗಳನ್ನೇ ದಿಟ್ಟಿಸುತ್ತಿದ್ದರು. ( ಕೃಷ್ಣನ ಕೈಯಲ್ಲಿ ದುಂಡು ಸ್ತನವಿದ್ದಂತೆ ಆ ಗೋವರ್ಧನವು ತೋರುವುದೆಂದು ಭಾವವು. ಬೆಟ್ಟದಂತೆ ಗಟ್ಟಿಯಾಗಿರುವ ಹಾಗು ಪುಲಕಿತಗೊಂಡ ತಮ್ಮ ಸ್ತನಗಳನ್ನು ಶ್ರೀಕೃಷ್ಣನು ತನ್ನ ಹಸ್ತಗಳಿಂದ ಹಿಡಿಯಲಿ ಎಂಬ ಗೋಪಿಕೆಯರ ಭಾವವು ಇಲ್ಲಿದೆ.)

Look at the mountain Govardhana, which is a feast for the eyes, nearby Yamuna. In the past, on seeing Govardhana, which is thrilled with the flowers-like rain waters, in the hands of Lord Krishna, the fawn-eyed ladies looked at their vibrating nippled breasts, which had been like a ball in the hands of Lord Krishna.

**वंशीं कृष्णाधररससुधापानहर्षप्रकर्षात्**
**सङ्गायन्तीमिव सरभसं लोकमाना कराब्जैः ॥**
**सेर्ष्यालोकप्रसृतनयना वारयन्त्यो मुरारेः**
**सीत्कुर्वाणा मधुरमधरं यत्र गोप्यश्चुचुम्बुः ॥ ५३ ॥**

तत्र गोपीकृतकृष्णचुम्बनलीलां वर्णयति । **वंशीमिति** । यत्र गोवर्धने । वंशीं कृष्णगृहीतां मुरलीम् । कृष्णस्य अधररस एव सुधा तस्याः पानेन य हर्षस्य प्रकर्षः उद्रेकस्तस्मात् । सङ्गायन्तीं इव लोकमानाः गोप्यः । ईर्ष्यया परोत्कर्षासहिष्णुत्वेन

१. कन्दुकाभमिति ॥ कन्दुकस्य आभा इव आभा यस्य तम् । उपमानपूर्वपदबहुव्रीहिः ॥

सहिता ये आलोका दृष्टिपातास्तैः प्रसृतानि विस्तृतानि नयनानि यासां ताः सत्यः । करा अब्जानि इव तैः । सरभसं रभसेन वेगेन सहितं यथा भवति तथा । ''रभसो वेगहर्षयो'' रिति विश्वः । वारयन्त्यः पुनः वंश्या श्रीकृष्णाधरसंयोगस्य विघ्नं कुर्वत्यः । मुरारेः मधुरं अधरं सीत्कुर्वाणाः सीदित्यव्यक्तध्वनिं कुर्वाणाः सत्यः । चुचुम्बुः । चुबि वक्त्रसंयोगे लिट् । अत्र उत्प्रेक्षा । वेणुनादावसरे वादकाधररसः वेणुसुषिरे प्रविशतीति भावोऽत्र ज्ञेयः । प्रकृते गोपीनामपेक्षितः कृणाधररसः वंश्या लब्ध इति तासामीर्ष्या । उक्तं च भागवते -

गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदराधरसुधासरसाग्र्यगेयम् ।
भुङ्क्ते स्वयं यदवशिष्टरसौघमार्गे हृष्टत्वचोऽश्रु मुमुचुस्तरवः सदर्भा ।। इति ।।

यत्र गोवर्धने एवमभूत् तं गोवर्धनाद्रिं पश्येति पूर्वेणान्वयः ।

ಒಮ್ಮೆ ಈ ಗೋವರ್ಧನದಲ್ಲಿ, ''ಶ್ರೀ ಕೃಷ್ಣನ ಕೆಳ ತುಟಿಯಿಂದ ಸೋರಿದ ಅಮೃತರಸ ಕುಡಿದ ಆನಂದದ ಉದ್ರೇಕಕ್ಕೆ ಈ ಕೊಳಲಿನ ನಾದ ಹೀಗೆ ಹೆಚ್ಚೆಚ್ಚು ಆಗುತ್ತಿದೆ'' ಎಂದು ತಿಳಿಯುತ್ತ ಗೋಪಿಯರೆಲ್ಲ ಅಸೂಯೆಗೊಂಡು ಕಣ್ಣು ಅರಳಿಸುತ್ತ, ಕಮಲ ಕೋಮಲ ಕೈಗಳಿಂದ ರಭಸವಾಗಿ ಆ ಕೊಳಲನ್ನು ದೂರ ತಳ್ಳುತ್ತಿದ್ದರು. ಮಧುರವಾದ ಕೃಷ್ಣನ ಅಧರಕ್ಕೆ ಸೀತ್ಕಾರದೊಡನೆ ಮತ್ತೆ ಮತ್ತೆ ಮುತ್ತಿಡುತ್ತಿದ್ದರು.

In the mountain, on looking at the flute, Gopikas thought that the flute is singing loudly because of the excited pleasure due to the drinking of the nectar from the lower lip of Lord Krishna. Then, with their eyes wide open with envy, avoiding the flute from Krishna`s lips, Gopikas kissed the sweet lips of Lord Krishna again & again emanating sucking noise.

**यस्मिन् वंशीसरसमधुरालापतानान्तगीतं**
**श्रुत्वायाताः स्वपतिसुभगाश्लेषसौख्यं त्यजन्त्यः ।।**
**गोपीवेणीवलयितगलं लोकयन्त्यो मुरारे-**
**रध्यारूढाः प्रियपरिसरं मन्यमानाः फणिन्यः ।। ५४ ।।**

गोवर्धने सञ्जातं श्रीकृष्णविहारं वर्णयति । **यस्मिन्निति** । पूर्वश्लोकेन अन्वयः । स्वरसं स्वभावेन आस्वाद्यम् । मधुरः आलापः यस्य तादृशम् । तानः गानाङ्गविशेषः । स च गानोपसंहारे प्रयुज्यते । तस्मात् तानः अन्ते यस्य तादृशम् । वंश्याः मुरल्याः वाद्यविशेषस्य । गीतं गानम् । श्रुत्वा स्वपतेः सुभगः आश्लेषः तेन यत्सौख्यं सुखम् तत् । त्यजन्त्यः स्त्रियः । मुरारेः कृष्णस्य । गोपीनां वेणीभिः वलयितं गलं लोकयन्त्यः पश्यन्त्यः सत्यः । फणिन्यः प्रियपरिसरं प्रियस्थानम् । यद्यपि परिसरशब्दस्य नद्यादिसमीपवर्तिस्थलमित्यर्थः । अत्र तु स्थलमात्रे तात्पर्यमिति ज्ञेयम् । अध्यारूढाः[1] आरोहितवत्यः इति । यस्मिन् गोवर्धने । मन्यमानाः तर्कयन्त्यः । अभूवन् इति शेषः । तादृशं गोवर्धनाद्रिं पश्य इति पूर्वेणान्वयः । तथा च मुरलीनादश्रवणतः सर्वं गृहादि परित्यज्य आगता गोप्यः स्वपूर्वमेवागताः काश्चित् गोपीः चुम्बनकामतः श्रीकृष्णमुखसमीपस्थमुखीः सतीः अपश्यन्नित्यर्थः । अत एव तच्च तासामसूयातिशयकारणमासीदिति भावद्योतकं कृष्णगलवलयिततद्वेणीनां फणिनीत्वानुसन्धानमिति भावः । अथवा मुरारेः गलं स्वसदृशवेणीवलयितं दृष्ट्वा फणिन्यः प्रियपरिसरमिदमिति मन्यमाना अध्यारूढा अभूवन्निति भावः । अत्र दृष्टान्तपर्यायोक्तसङ्करः ।

ಆ ಗೋವರ್ಧನದಲ್ಲಿ, ಶ್ರೀ ಕೃಷ್ಣನ ಕೊಳಲಿನಿಂದ ಬಂದ ಸ್ವರಬದ್ಧವಾದ ಮಧುರ ಆಲಾಪವನ್ನು ಹಾಗು ತಾನಪರ್ಯಂತವಾದ ಸಂಗೀತವನ್ನು ಕೇಳಿದಾಗ, ಗೋಪಿಯರೆಲ್ಲ ತನ್ನ ಗಂಡನ ಬಿಗಿಯ ಪ್ಪುಗೆಯ ಸುಖವನ್ನು ದೂರಮಾಡಿ ಓಡಿ ಬರುತ್ತಿದ್ದರಂತೆ. ಆದರೆ, ತಮಗಿಂತ ಮೊದಲೇ ಬಂದ ಗೋಪಿಯೊಬ್ಬಳ ಜಡೆಯು ಕೃಷ್ಣನ ಕೊರಳಿಗೆ ಸುತ್ತಿರುವುದನ್ನು ಕಂಡಾಗ, ತಮ್ಮ ಅಚ್ಚುಮೆಚ್ಚಿನ ತಾಣಕ್ಕೆ ಕರಿನಾಗಿಣಿಯು ಏರಿರುವಂತೆ ಯೋಚಿಸುತ್ತಿದ್ದರಂತೆ.

On hearing the melodious music of flute flowing from Govardhana, the Gopikas, rejecting the enjoyment of hugging their husbands, rushed to the spot of Lord Krishna. There on seeing the others' black plaits surrounding the neck of Lord Krishna, they thought that their beloved place is occupied by a King Cobra. (This means, she envied on the other Gopika, who was already kissing Krishna's cheeks.)

---

१. अध्यारूढा इति ॥ गत्यर्थाकर्मक –० (३-४-७२) इति क्तः ।

**तीर्त्वा गन्तुस्तरणितनयां भोजवृष्ण्यन्धकानां**
**वासस्थानं पतति मधुरा चक्षुषः पद्धतौ ते ॥**
**वारां धारा नयनगलिता योषितां मागधीनां**
**पर्यातन्वन् वलयपरिखाः विप्र यस्यां नगर्याम् ॥ ५५ ॥**

गोवर्धनाद्रिदर्शनानन्तरं उत्तरत्र गमने मधुरादर्शनं भवतीति वर्णयति । **तीर्त्वेति** । विप्र ! तरणिः सूर्यः । ''द्युमणिस्तरणिर्मित्र'' इत्यमरः । तस्य तनयां यमुनां नदीम् । तीर्त्वा । गन्तुः ते चक्षुषः दृष्टेः पद्धतौ मार्गे । भोजाः वृष्णयः अन्धका इति वंशनामवतां राज्ञाम् । वासस्थानं वासभूमिः । मथुरा मथुरापुरी । पतति । त्वया दृश्यत इति भावः । मधुराया अधुनातनावस्थां वर्णयति । **वारामिति** । मागधीनां योषितां मगधराजपुत्र्योः अस्थिप्रास्थ्योः तद्दासीनां च । नयनेभ्यः गलिताः । वारां अश्रुजलानां धाराः प्रवाहाः । यस्यां नगर्यां । वलयपरिखाः । वलयवत् कङ्कणवत् परिखाः खेयानि ताः । 'खेयं तु परिखा'इत्यमरः । पर्यातन्वन् अकुर्वन् । परि उपसर्गपूर्वकस्य तनु विस्तार इति धातोः लङ् । कृष्णेन कंसे निहते सति कंसपत्नीभिः स्राविता अश्रुधारा अतीव आसन् इति भावः । मधुरायां अन्तः कृष्णाभावान्न वैशिष्ट्यं वक्तव्यमस्तीति कृष्णमहिमाद्योतकतया मधुराया बाह्यालीप्रदेशवर्णनमेव कृतं रुक्मिण्येति मन्तव्यम् । एतेन मधुरां अप्रविश्यैव केवलं पश्यन् पुरतो याहीति रुक्मिण्या प्रतिपादितं भवतीति भावः । कंसो हतः मथुरा च रक्षितेत्यस्य भङ्ग्यन्तरेण वर्णनात् पर्यायोक्तम् ॥

ಈ ಯಮುನೆಯನ್ನು ದಾಟಿ ಮುಂದೆ ಹೋದಾಗ, ನಿನಗೆ ಮಥುರಾ ಪಟ್ಟಣ ಕಾಣಿಸುತ್ತದೆ. ಹಿಂದೆ, ಭೋಜ – ವೃಷ್ಣಿ – ಅಂಧಕ – ಮುಂತಾದ ಮಹನೀಯರು ಅಲ್ಲೇ ವಾಸವಾಗಿದ್ದರು. ಕಂಸನ ಪತ್ನಿಯರಾದ ಜರಾಸಂಧನ ಪುತ್ರಿಯರು ಸುರಿಸಿದ ಕಣ್ಣೀರ ಧಾರೆ, ಆ ಮಧುರೆಗೆ ಸುತ್ತಲೂ ಕಂದಕವೇ ಆಗಿತ್ತಂತೆ. (ಅಂದರೆ, ಶ್ರೀ ಕೃಷ್ಣ ಕಂಸನನ್ನು ಕೊಂದು ಮಥುರೆಯನ್ನು ರಕ್ಷಿಸಿದ್ದನೆಂದು ಭಾವವು)

Oh Brahmin! After crossing the river Yamuna, you will see the city Mathura, which was the dwelling place for Bhojas, Vrishnis, and Andhakas. The tears flown from the eyes of women belonging to Magadha clan (wives of Kamsa) have formed the moat around the

city. (Krishna killed Kamsa here, thereby making his wives weep endlessly.)

**यातस्तस्माद्विरचितजवोऽनेकजन्मप्रचीर्णैः**
**पुण्यैर्दृश्यं दिशि दिशि समाकीर्णकीर्तिप्रसारम् ॥**
**आनर्ताख्यं द्विज जनपदं प्रेक्षसे व्योमचुम्ब-**
**च्छाखैर्यस्मिन् सुरभितरुभिर्वैजयन्तीयतेऽद्य ॥ ५६ ॥**

ततः आनर्तदेशं प्रति गन्तुं तद्देशं वर्णयति । **यात इति** । हे द्विज! त्वम् । तस्मात् मधुरापुरात् । विरचितः जवः गमनशीघ्रता येन तादृशः सन् । अनेकजन्मसु प्रचीर्णैः सम्पादितैः। पुण्यैः । दृश्यं द्रष्टुं शक्यम् । दिशि दिशि[1] सर्वत्रेत्यर्थः । समाकीर्णा या कीर्तिः तस्या प्रसारः यस्मिन् तादृशम् । आनर्तनामकं जनपदं जनवसतिप्रदेशम् । 'भवेज्जनपदो जानपदोऽपि जनदेशयोः'' इति विश्वः । प्रेक्षसे पश्यसि । प्रोपसर्गपूर्वकस्य ईक्ष दर्शनाङ्कनयोः लट् । तं देशं वर्णयति । **व्योमेत्यादिना** । यस्मिन् आनर्तदेशे । व्योम चुम्बन्त्यः शाखा येषां तैः । सुरभिसहितास्तरवस्तैः । अद्य । वनमितिशेषः । वैजयन्तीयते[2] ध्वजवदाचरति । ''पताका वैजयन्ती स्यात्'' इत्यमरः । तं जनपदं प्रेक्षस इति योजना कार्या । आनर्ते वृक्षाः अतीव ऊर्ध्वमुखा इति भावः । अत्र उपमालङ्कारः ॥

ಓ ಬ್ರಾಹ್ಮಣ ! ಅಲ್ಲಿಂದ ಮುಂದೆ ಬೇಗ ಹೋಗು. ಆನರ್ತವೆಂಬ ದೇಶವನ್ನು ನೋಡುವೆ. ಅನೇಕ ಜನ್ಮಗಳ ಪುಣ್ಯ ಪರಿಪಾಕವಿದ್ದರೆ ಮಾತ್ರ ಅಂಥ ದೇಶವನ್ನು ಕಾಣಲು ಸಾಧ್ಯ. ಆ ನಾಡಿನ ಕೀರ್ತಿ ದಿಕ್ಕು ದಿಕ್ಕಿಗೂ ಹರಡಿದೆ. ಗಗನ ಚುಂಬಿ ಸುಗಂಧ ಬೀರುವ ಮರಗಳಿಂದ ಅಲ್ಲಿಯ ಕಾಡು ಆ ನಾಡಿನ ವಿಜಯ ಬಾವುಟದಂತೆ ತೋರುತ್ತದೆ.

Oh Brahmin! As you proceed further, you will see a famous state called Anartha which is visible to only such people who have earned fortunes from many births. There are skyscraping fragrant trees looking like flags of victory to the state even today.

---

१. दिशि दिशीति ॥ नित्यवीप्सयोरिति द्वित्वम् ।

२. वैजयन्तीयते इति ॥ कर्तुः क्यङ् सलोपश्चेति क्यङ् । ङित्वादात्मनेपदित्वमिति भावः ॥

यस्मिन् देशे सुरभिपवनः पान्थतापापनोदी
भूमिः स्पर्शाद्धरति हृदयं कोमला कामनीव ॥
तेजः सर्वं हिमकरनिभं वारि पीयूषसारं
नेत्रारामं खमपि ददते शर्म भूतानि पञ्च ॥ ५७ ॥

आनर्ते पुण्यविशेषतः किं दृश्यमिति विचार आह । **यस्मिन् इति** । यस्मिन् आनर्ते देशे । सुरभिपवनः पान्थानां तापस्य अपनोदी परिहारकः अस्ति । भूमिः कोमला कामिनी ललना इव । स्पर्शात् स्पर्शादेव । हृदयं हरति अपहरति । सर्वं तेजः हिमकरस्य चन्द्रस्य सदृशम् । वारि पीयूषात् सारम् । खमपि गगनमपि नेत्राणामारामः सुखं येन तादृशं अस्ति । एवं रीत्या, पञ्च भूतानि पृथिव्यप्तेजोवाय्वाकाशाः । यस्मिन् देशे । शर्म सुखम् । ''शर्मशातसुखानि च'' इत्यमरः । ददते । डु दाञ् दाने लट् । तद्देशं प्रेक्षस इति पूर्वेणान्वयः । भूतानां भयङ्करत्वं स्वभावः । परन्त्वत्र भूतानां सुखकरत्वमिति तादृशदेशदर्शनं प्राचीनाचीर्णपुण्यगम्यमिति भावः । अत्र उपमा । भूतानि शर्म ददत इति विरोधाभासः ॥

ಆ ಆನರ್ತದಲ್ಲಿ ಸುವಾಸನೆಯ ತಂಗಾಳಿಯು ಪಯಣಿಗರ ತಾಪವನ್ನು ಕಳೆಯುತ್ತದೆ. ಕೋಮಲೆಯಾದ ಕಾಮಿನಿಯಂತೆ ಅಲ್ಲಿಯ ಭೂಮಿಯು ಸ್ಪರ್ಶಮಾತ್ರದಿಂದ ಹೃದಯ ಸೆಳೆಯುತ್ತದೆ. ತೇಜಃ ಪುಂಜವಂತೂ ಬೆಳದಿಂಗಳಂತೆ ಆಹ್ಲಾದಕರವಾಗಿದೆ. ನೀರು ಅಮೃತಕ್ಕಿಂತಲೂ ಹಿರಿದಾಗಿದೆ. ಆಗಸವು ಕಣ್ಣಿಗೆ ಹಾಯೆನಿಸುತ್ತದೆ. ಹೀಗೆ ಅಲ್ಲಿ ಪಂಚಭೂತಗಳೂ (ಆಕಾಶ, ವಾಯು, ತೇಜಸ್ಸು, ಜಲ, ನೆಲ ) ಸುಖವನ್ನೇ ಕೊಡುತ್ತವೆ. (ಭೂತಗಳು ಅಂದರೆ ಪಿಶಾಚಿಗಳು ಹೆದರಿಸಿ ದುಃಖ ಕೊಡುತ್ತವೆ. ಆದರೆ ಇಲ್ಲಿ ಐದೂ ಭೂತಗಳು ಸುಖಕರವೆಂದು ವಿರೋಧಾಭಾಸವೆಂದು ಭಾವವು)

Where, the fragrant cool breeze air relieves the travelers from heat; the ground, on touching itself attracts the heart, like a lustful woman; lights of sun and fire etc., are like moonlight; water is the essence of nectar; sky is pleasant for eyes; in such Anartha all the 5 elements of Panchabhuta give pleasures to all.

आत्मारामैर्विहितवसतीनाश्रमान् पश्यसि त्वं
येषु ब्रह्मन् परिसृतकरस्तापसीनां वपूंषि ॥

**स्प्रष्टुं यत्नं विदधदरुणो रन्ध्रमप्राप्तकामः**
**मार्गत्युद्यद्द्रुमपरिसरद्वीरुधां पल्लवान्तः ॥ ५८ ॥**

तत्रस्थाश्रमान् वर्णयति । **आत्मारामैरिति** । येषु आश्रमेषु । तापसानां वपूंषि स्प्रष्टुं । परिसृताः करा किरणरूपकरा येन तादृशस्सन् । यत्नं प्रयत्नम् । विदधत् कुर्वन्। अरुणः उदयकालीनः भानुः । ''मिहिरारुणपूषणा'' इत्यमरः । अप्राप्तः कामः यं तादृशः सन् । स्प्रष्टुमसमर्थ इति यावत् । उद्यतां द्रुमाणां वृक्षाणां परिसरन्त्यः वलयिता या वीरुधः लतास्तासाम् । ''लता प्रतापिनी वीरुत्'' इति अमरः । पल्लवानां किसलयानां अन्तः । रन्ध्रं सुषिरम् । मार्गति[१] । अन्वेषणं करोति । तान् । आत्मनैव आरामः सुखं येषां तैर्मुनिभिः। विहिता वसतिः येषु तान् । आश्रमान् त्वं पश्यसि । दृशिर् प्रेक्षणे लट् । आश्रमस्था तापसस्त्रियः सुन्दर्य इति, तद्वपुस्स्पर्शाभिलाषः सूर्यस्यापि भवतीति, तेन कामरागेण स अरुण इति, तादृशसूर्येण स्प्रष्टुं करप्रसारे द्रुमा परस्परं दृढसंलग्ना विघ्ना इति, तदर्थं सूर्येण रन्ध्रान्वेषणं क्रियत इति भावः । तापस्यः सूर्येणैव यदा स्प्रष्टुमशक्यास्तर्हि लौकिककामुकैः स्प्रष्टुमशक्या इति किमु वक्तव्यमिति भावः । एवं वनसान्द्रतापि अतीवेति भावः । यथा हि सुन्दरीणां स्पर्शासम्भवे रन्ध्राद्यन्वेषणतः तद्दर्शनपरा कामुकाः स्युस्तथा अरुणसूर्यचर्येति च भावः । यस्मिन्नानर्ते एतादृशाश्रमान् पश्यसि तं देशं प्रेक्षस इति पूर्वेणान्वयः । अत्र अरुण इति परिकराङ्कुरः । परिसृतकर इति श्लेषः । अप्राप्तकामत्वेन वनसान्द्रता व्यज्यत इति पर्यायोक्तम् । रन्ध्रं मार्गति इति तु उत्प्रेक्षा ॥

ಅಲ್ಲಿರುವ ಆಶ್ರಮಗಳಂತು ಆತ್ಮತೃಪ್ತ ಮುನಿಗಳಿಂದ ತುಂಬಿವೆ. ಮತ್ತೆ ಅಲ್ಲಿಯ ತಾಪಸಿಯರು ಬಲು ಚೆಲುವೆಯರು. ಅವರ ಮೈ ಮುಟ್ಟಬೇಕೆಂದು, ಆಸೆಗೂಡಿ ಕೆಂಪಾದ ಸೂರ್ಯನು, ತನ್ನ ಕಿರಣ ವೆಂಬ ಕರವನ್ನು ಎಲ್ಲೆಡೆ ಚಾಚಿದರೂ ದಟ್ಟವಾದ ಮರಗಳ ಕೆಳಗಿರುವ ಅವರನ್ನು ಮುಟ್ಟಲಾಗದೆ ಚಡಪಡಿಸುವನಂತೆ. ಮತ್ತೆ, ಆ ಮರಕ್ಕೆ ಸುತ್ತಿಕೊಂಡಿರುವ ಬಳ್ಳಿಯ ಚಿಗುರಿನೊಳಗೆ ಸಣ್ಣ ತೂತೊಂದನ್ನು ಹುಡುಕುತ್ತಾನಂತೆ.

---

१. मार्गतीति । मार्ग अन्वेषणे आधृषीयः ॥

Here you will find the hermitages of sages who are self contented. The sun trying to touch the bodies of the women of these hermitages, failing which, because of the dense forest, searches for small holes in the tender leaves of creepers, which have encircled the skyscraping trees.

केशाकर्षः सुरतसमये विग्रहेनाङ्गनानां
पीनोरोजे बहुकठिणता नैव चित्ते प्रजानाम् ॥
शास्त्रे चिन्ता न विषयगणे सर्वसम्पत्तिमत्त्वात्
यस्मिन् देशे निखिलजगतामापणान् पश्यसि त्वम् ॥ ५९ ॥

अथानर्ते पुरस्थजनलीलां वर्णयति । **केशाकर्ष इति** । यस्मिन् देशे । सुरतसमये एव केशाकर्षः परस्परकेशग्रहणं भवति । न तु विग्रहे पार्श्वस्थजनैः साकं विवादादिषु इति भावः । बहुकठिणता अङ्गनानां पीनोरोजे पीनस्तने भवति नैव प्रजानां चित्ते काठिण्यम् । चिन्ता शास्त्र एव भवति । सर्वसम्पत्तिमत्वात् सकलैश्वर्यसत्वात् विषयगणे चिन्ता यत्र न भवति । ''सम्पत्तिः श्रीश्च लक्ष्मीश्च'' इत्यमरः । हे विप्र त्वं निखिलजगतां सकलदेशानां आपणान् क्रय्यशालाः यस्मिन् देशे पश्यसि । ''आपणस्तु निषद्यायां'' इत्यमरः । तादृशं आनर्तं प्रेक्षस इति पूर्वेणान्वयः ॥ केशाकर्षकाठिण्यचिन्तानां दोषाणां गुणत्वापादकतया तद्देशवर्णनं कृतमिति भावः । परिसङ्ख्यालेशयोस्सङ्करः ॥

ಆ ಆನರ್ತದಲ್ಲಿ, ಕೂದಲು– ಕೂದಲು ಹಿಡಿದು ಜಗ್ಗಾಡುವುದು ಸುರತ ಕಾಲದಲ್ಲಿ ಮಾತ್ರ. ಜಗಳದಲ್ಲಿ ಇರುವುದಿಲ್ಲ. ಅಂತೆಯೇ ಕಾಠಿಣ್ಯವೆಂಬುದು ಕೇವಲ ಹೆಂಗಸರ ಸ್ತನಗಳಲ್ಲಿ ಇತ್ತೇ ಹೊರತು, ಹೃದಯದಲ್ಲಿ ಇರುವುದಿಲ್ಲ. ಅಲ್ಲಿ ಶಾಸ್ತ್ರಗಳ ಬಗ್ಗೆ ಚಿಂತೆ ಆಗುತ್ತಿತ್ತೇ ಹೊರತು, ವಿಷಯ ಭೋಗಕ್ಕೆ ಚಿಂತೆಯೇ ಇಲ್ಲ. ಕಾರಣ ಅಲ್ಲಿ ಸಕಲ ಐಸಿರಿ ತುಂಬಿ ತುಳುಕುತ್ತಿದೆ. ಇಡಿಯ ಭೂಮಂಡಲದ ಅಂಗಡಿಗಳೆಲ್ಲ ನಿನಗಲ್ಲಿ ಕಾಣಸುತ್ತದೆ.

Oh Brahmin! Here the dragging of one's hair takes place only during copulation, not in quarrel. The hardness lies only in womens' breasts not in anybody's heart. The worry exists only in decoding shastras and never about mundane things because of the existence

of all the wealth. You can see all the shops of this world in this Anartha.

ब्रह्मन् तेजोविधुततरणीन् मन्त्रपूतप्रतीकान्
मार्गे मार्गे कलयसि दृशा ब्राह्मणान् ब्रह्मनिष्ठान् ॥
सौहार्दं तैः श्रुतिशतपरिष्कारचिन्ताप्रसङ्गात्
सन्देशो मे स्मरणसरणेर्मापयायाद्गतस्य ॥ ६० ॥

मध्ये काञ्चित् प्रार्थनां ब्राह्मणसविधे करोति । **ब्रह्मन्निति** । हे ब्रह्मन् । तेजसा विधुतः कम्पितः तरणिर्यैस्तान् । मन्त्रेण पूता प्रतीकाः देहावयवा येषां तान् । ब्रह्मणि परब्रह्मणि वैदिकमार्गे वा निष्ठा येषां तान् । ब्राह्मणान् । त्वं दृशा । मार्गे मार्गे सर्वत्र सञ्चारकाल इति यावत् । कलयसि पश्यसि । ततः श्रुतिशतस्य परिष्कारस्य चिन्ताया विचारस्य च प्रसङ्गात् तैः सह सौहार्दं स्नेहं गतस्य प्राप्तस्य ते । मम सन्देशः स्मरणसरणेः स्मृतिपथात् । मा अपयायात् अपगतो मा भवेत् । अप उपसर्गपूर्वकात् या प्रापणे लिङ् । वेदशास्त्रचतुरस्य वैदिकस्यास्य विप्रस्य सजातीयवैदिकेषु स्नेहविशेषः सुलभ इति ततश्च शास्त्रार्थविचारामृतमग्नस्य तस्य जगदेव विस्मृतं भवतीति रुक्मिणीसन्देशोऽपि विस्मृतः स्यादिति शङ्कया एवं प्रार्थनोक्तिः । तत्र च रुक्मिण्या शास्त्रार्थं मा कुर्विति नोच्यते । अपि तु स्वसन्देशो विस्मृतो न स्यादित्येवेति सर्वत्र मार्गे ब्राह्मणापेक्षितशास्त्रार्थचर्चालाभप्रलोभनतः तस्य यात्रोन्मुखता समुज्जीविता भवतीति भावः। शीघ्रं गच्छेति स्वाभिप्रायस्य भङ्ग्यन्तरेण वर्णनात् पर्यायोक्तम् ॥

ಓ ವಿಪ್ರನೆ! ಸೂರ್ಯನಿಗಿಂತ ವರ್ಚಸ್ವಿಗಳಾದ, ಮಂತ್ರ ಪೂತಾತ್ಮರಾದ ಅನೇಕ ಬ್ರಾಹ್ಮಣರನ್ನು ನೀನು ದಾರಿಯುದ್ದಕ್ಕೂ ನೋಡುತ್ತೀಯ. ಆಗ, ಅವರು ವೈದಿಕರೆಂದು ನೋಡು ನೋಡುತ್ತಲೇ ಸ್ನೇಹ ಬೆಳೆದು, ಅವರೊಡನೆ ವೇದಾರ್ಥಗಳ ಬಗ್ಗೆ ಹಾಗು ನೂರಾರು ಪರಿಷ್ಕರಗಳ ಬಗ್ಗೆ ವಾಕ್ಯಾರ್ಥದ ವಿನೋದವನ್ನು ನೀನು ಆರಂಭಿಸಿದರೆ, ನನ್ನ ಸಂದೇಶದ ಮಾತು ನಿನಗೆ ಮರೆತು ಹೋದೀತೆಂದು ಹೆದರಿಕೆ ಆಗುತ್ತದೆ. ಹಾಗಾಗದಂತೆ ನೋಡಿಕೊ.

You will find all the way, the Brahmins who have become pure by the virtue of mantras, and whose brightness makes the sun look

dull. On observing their Vaidika fashion developing friendship and having discussions on Vedas and Parishkaras with them, let my message not go away from your mind.

**अस्य प्रान्ते लसति भगवान् ह्रादिनीनामधीशः**
**खेयीभूतो वलय इव ते द्वारकाया रमण्याः ॥**
**वीचीघर्षात्तटविलुठिता रत्नमुक्ताप्रवाल-**
**श्रेणी शोभां वहति नितरां यस्य सोपानपङ्क्तेः ॥ ६१ ॥**

ततः द्वारकां प्रति गन्तुं मध्ये समुद्रप्राप्तिं वर्णयति । **अस्येति** । यस्य समुद्रस्य । वीचीनां तरङ्गानां घर्षात् । तटे विलुठिता । रत्नानां, मुक्तानां, प्रवालानां विद्रुमाणां, श्रेणी पङ्क्तिः । ''वीथ्यालिरावलिः पङ्क्तिः श्रेणी'' इत्यमरः । सोपानपङ्क्तेः आरोहणमार्गस्य पङ्क्तेः आवलेः । ''आरोहणं स्यात् सोपानं ।'' इत्यमरः । शोभां नितरां वहति धरति । वह प्रापणे लट् । तादृशः द्वारकायाः खेयीभूतः । ह्रादिनीनां नदीनां अधीशः भगवान् पूज्यः समुद्रराजः । अस्य आनर्तस्य प्रान्ते समीपे । सीमायामिति वा । रमण्या वलय इव लसति शोभते । अत्र उपमालङ्कारः ॥

ಅದರ ಹತ್ತಿರವೆ, ನದಿಗಳ ರಾಜನಾದ ಸಮುದ್ರನು ಹೊಳೆಯುತ್ತಾನೆ. ದ್ವಾರಕೆಯೆಂಬ ಸುಂದರಿಗೆ, ಬಳೆಯಾದಂತೆ ಸುತ್ತ ಕಂದಕವಾಗಿದ್ದಾನೆ. ಮತ್ತೆ, ಅವನ ಅಲೆಯ ಹೊಡೆತದಿಂದ ದ್ವಾರಕೆಯ ತೀರಕ್ಕೆ ಉರುಳಿ ಬೀಳುವ ಮುತ್ತು-ರತ್ನ- ಹವಳಗಳ ಸಾಲುಗಳು, ದೂರದಿಂದ ನೋಡಿದಾಗ ಮೆಟ್ಟಿಲುಗಳಂತೆ ಕಾಣುತ್ತದೆ.

Nearby Anartha the king of rivers, the sea, is seen who is a moat for Dwaraka like a bangle of woman. The row of gems, pearls & corals look like steps which are rolled over by the lashing of waves, on the beach of Dwaraka.

**अन्यः पन्थाः जनपरिचितादेष सङ्कीर्तितस्ते**
**श्रावं श्रावं मुनिजनमुखान्निश्चयेनावगत्य ॥**
**भिन्नो मार्गो भुवनविदितो विप्र नासूचि यस्मात्**
**चेदीशाद्याः पथि परिचयाद्रोपितं स्फोटयेयुः ॥ ६२ ॥**

यद्यपि विदर्भराजधानीकुण्डिनातः द्वारकां प्रति गमने गोकुलादिकं प्राप्यैव गन्तव्यमिति मार्गनियमो नास्ति । जनपरिचितः मार्गस्तु अदीर्घः अन्य एव । तथापि तं परिचितं मार्गं विहाय एतस्मिन्नेव दीर्घे मार्गे ब्राह्मणेन गमनं कर्तव्यमिति प्रतिपादनस्य एकं कारणं वक्ति । **अन्य इति** । हे विप्र ! मुनिजनमुखात् श्रावं श्रावं अतीव श्रुत्वा । निश्चयेन असन्देहेन । अवगत्य ज्ञात्वा । ते सङ्कीर्तितः एषः पन्थाः जनपरिचितात् मार्गादिति शेषः । अन्यः विलक्षणः । कुतः परिचितो मार्गः नोक्त इत्यत आह । **भिन्न इति** । यस्मात् कारणात् । चेदीशः शिशुपाल आद्य येषां ते । पथि परिचयात् सम्यक् परिज्ञानात् । गोपितं रहस्यं स्फोटयेयुः स्फोटं कारयेयुः स्फुट विकसने णिचि । इति शङ्का । तस्मात् भुवनविदितः भिन्नः स मार्गः न असूचि । गन्तुं युक्त इति न प्रतिपादितम् । सूच पैशुन्ये कर्मणि लुङ् । तथा च मदन्तःपुरमागतो भवान् परिचितमार्गेण यदि द्वारकां गमिष्यसि तर्हि कुतोऽयमस्मिन् द्वारकामार्गे गच्छतीति विचारेण चेदीशादयः त्वां प्रष्टुं प्रवृत्ता स्युरिति आशङ्क्य, तदवकाश एव न भवेदिति अन्य पन्थाः कथित इति भावः । अत्र काव्यलिङ्गालङ्कारः ॥

ಓ ಬ್ರಾಹ್ಮಣ ! ನಾನೀಗ ಹೇಳಿದ ದ್ವಾರಕೆಯ ದಾರಿಯು ಎಲ್ಲರಿಗೂ ಪರಿಚಿತವಾದ ದಾರಿಯಲ್ಲ. ಇದು ಮತ್ತೊಂದು ದಾರಿಯು. ಋಷಿ–ಮುನಿಗಳ ಮುಖದಿಂದ ಸರಿಯಾಗಿ ಕೇಳಿ ನಿರ್ಧರಿಸಿ ಕೊಂಡು ನುಡಿದಿದ್ದೇನೆ. ಎಲ್ಲರಿಗೂ ಗೊತ್ತಿರುವ ದಾರಿಯಲ್ಲಿ ಹೋದರೆ, ಶಿಶುಪಾಲಾದಿಗಳು ಎದುರು ಬಂದು, ನಮ್ಮ ಗುಟ್ಟು ರಟ್ಟುಗೊಳಿಸಿಬಿಟ್ಟಾರೆಂದು ಅದನ್ನು ಹೇಳುತ್ತಿಲ್ಲ.

. Oh Brahmin! The route, which I have told you, is different from the acquainted route. I have come to know from sages that this is also a perfect route. Why I have not told you about that acquainted route because Shishupala and his associates may split open our secrets in this route.

**नौकायानं तदनु कलय प्राप्यते चक्षुषा द्राक्**
**गन्तव्यानां धुरि निगदिता द्वारका ते पुरीणाम् ॥**
**यस्यां राजत्युपरि खचिता दैवतैर्व्योमयान-**
**श्रेणीगीतैः सुरमृगदृशां मञ्जुलाट्टालिकेव ॥ ६३ ॥**

एतावत्पर्यन्तं कथमपि सञ्चारः कर्तुं शक्यते । परन्तु समुद्रतरणं कथं स्यात् कथं वा द्वारका लभ्येत ? इति विचारे समाधानमाह । **नौकायानमिति** । तदनु आनर्ते समुद्रप्राप्त्यनन्तरम् । तदनु तीर्थयात्रानियमानुसारेण । समुद्रयानस्य निषिद्धत्वेऽपि तीर्थयात्रार्थं तत्करणे दोषाभावात्, भगवदावासस्य द्वारकापुरस्य तीर्थक्षेत्रत्वात् इत्यर्थः । नौकया यानं कलय । गन्तव्यानां पुरीणां धुरि अग्रतः । निगदिता द्वारका पुरी ते चक्षुषा प्राप्यते । प्रोपसर्गपूर्वकादाप्लृव्याप्तौ इत्यतः कर्मणि लट् । दूरतः दृश्यमानां द्वारकां वर्णयति । **यस्यामिति** । यस्यां द्वारकायाम् । उपरि । दैवतैः । सुरमृगदृशां सुरसुन्दरीणां गीतैः । खचिता । व्योमयानानां विमानानां श्रेणी पङ्क्तिः । मञ्जुला रम्या । अट्टालिका इव अट्ट इव हर्म्यादिरूपगृहवत् । राजति शोभते । सा द्वारका चक्षुषा प्राप्यत इत्यनेन अन्वयः । अत्रोपमालङ्कारः ॥

ಆನಂತರ ನೀನು ದೋಣಿಯಲ್ಲಿ ಪಯಣ ಮಾಡು. ಆಗ ಹೋಗಲೇ ಬೇಕಾದ ಊರುಗಳಲ್ಲಿ ಮುಂಚೂಣಿಯಲ್ಲಿರುವ ದ್ವಾರಕೆಯು ನಿನ್ನ ಕಣ್ಣಿಗೆ ಕಾಣುತ್ತದೆ. ಆ ಊರಿನ ಮೇಲೆ ಸಾಲಾಗಿ ಸೇರಿರುವ, ಸುರಸುಂದರಿಯರ ಸಂಗೀತದಿಂದ ತುಂಬಿರುವ, ದೇವತೆಗಳ ವಿಮಾನಗಳಂತು, ದ್ವಾರಕೆಯ ಮಹಡಿಗೆ ಮೇಲ್ಮಹಡಿಯಂತೆಯೇ ತೋರುತ್ತವೆ.

Your onward journey will be with the help of a boat. Where the row of planes thronged with singing Apsaras, and Devathas, look like a loft, you will see such Dwaraka, the foremost place among cities, which must be visited.

# इति पूर्वसन्देशः

॥ श्रीमध्वान्तर्गतश्रीकृष्णार्पणमस्तु हरये नमः ॥

॥ श्रीगुरुराजो विजयते ॥

# मध्यसन्देशः

श्रीश्रीभागो जगति परिनिष्कास्य वैकुण्ठलोकात्
मुक्तिस्थानप्रकटनमिषात् स्थापितो विष्णुनेव ॥
सिन्धोर्मध्ये लसति नितरां गोपुरस्वर्णमुक्ता-
च्छायाकाया यदुपतिपुरी मण्डलीवामृतांशोः ॥ १ ॥

अस्मिन् सन्देशे द्वारकावर्णनं तत्र राजसभायां श्रीकृष्णवर्णनं तस्मै पत्रसमर्पण-प्रकार इत्यादिविषया वर्तन्ते । तत्रादौ नभसि स्थितैः दृश्यमानां द्वारकां वर्णयति । **श्रीश्रीभाग इति** । जगति मुक्तिस्थानस्य प्रकटनं प्रदर्शनं तस्य मिषः व्याजस्तस्मात् । विष्णुना वैकुण्ठात् परिनिष्कास्य स्थापितः श्रीश्रीभाग इव । गोपुरस्वर्णमुक्ता-च्छायाकाया गोपुरे पुरद्वारे या स्वर्णमुक्तास्तासां छाया एव कायः रूपं यस्यास्सा । यदुपतिपुरी द्वारका । अमृतांशोः चन्द्रस्य मण्डली इव सिन्धोः मध्ये नितरां लसति । लस श्लेषणक्रीडनयोः लट् । अज्ञातादृष्टमुक्तिस्वरूपाणां संसारिणां मन्दाधिकारिणां मोक्षापेक्षाया असम्भवात् तदर्थं मोक्षस्थानप्रकटनमावश्यकमिति भगवता द्वारकापुरी भुवि निर्मापिता स्यादिति भावः । अत्र उत्प्रेक्षोपमासंश्लेषः ।

ಕಡಲ ನಡುವೆ ಶ್ರೀ ಕೃಷ್ಣನ ದ್ವಾರಕಾಪುರವು ಚಂದ್ರ ಮಂಡಲದಂತೆ ಮೆರಗು ಗಳಿಸಿದೆ. ಗೋಪುರದಲ್ಲಿರುವ ಮುತ್ತು-ಬಂಗಾರದ ನೆರಳಿನಲ್ಲೇ ಆ ಊರು ಥಳಥಳಿಸುತ್ತಿದೆ. ಜಗತ್ತಿಗೆ ಮುಕ್ತಿ ಸ್ಥಾನವನ್ನು ತೋರಿಸುವ ನೆಪದಿಂದ ಶ್ರೀಹರಿಯು ವೈಕುಂಠದಿಂದ ಕಿತ್ತು ತಂದಿಟ್ಟಿರುವ ಸಾಕ್ಷಾತ್ ಶ್ರೀದೇವಿಯ ಸಿರಿಭಾಗದಂತೆ ಅದು ತೋರುತ್ತದೆ.

Dwaraka, the city of Lord Krishna, looks like the hallow round of moon in the ocean because it is covered with the shades of the pearls embedded in the golden towers. It appears as though Lord Vishnu, to exhibit the glory of the city of Moksha, has pulled out the Sribhaga (dwelling place of Goddess Lakshmi) from Vaikunta and placed it on the earth.

प्राकारेणान्तरलसदयस्संहितस्वर्णवर्णा-
नेकव्यामायतघनपविप्रक्रमग्रावभाजा ॥
चक्षूरम्या मुरहरपुरी पीतवासो वसाना
सान्तस्सारा विलसतितरां गुर्विणी कामिनीव ॥ २ ॥

दूरतः दृश्यमानां द्वारकां वर्णयति । **प्राकारेणेति** । अन्तरे ग्रावद्वयमध्ये लसता अयसा संहिताः सन्निकर्षिताः । स्वर्णवर्णाः । अनेके व्यामा ततबाह्वन्तरपरिमाण-विशेषाः । ''व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्'' इत्यमरः । तावत् आयताः विस्तृताः । घनाः काठिण्यवन्तः । पविवत् कुलिशवत् प्रक्रमः विक्रम येषां ते । ''कुलिशं भिदुरं पविः'' इत्यमरः। तादृशा ये ग्रावाः तान् भजतीति ग्रावभाक् तेन । प्राकारेण पुरवेष्टनेन । ''प्राकारो वरणं साल'' इत्यमरः । चक्षुषो रम्या । मुरहरस्य श्रीहरेः पुरी द्वारका । पीतवासः पीतवस्त्रम् । वसाना आच्छदनत्वेन धरन्ती । सान्तस्सारा अन्तस्सारेण उत्तमेन पदार्थेन सहिता । गुर्विणी गर्भिणी ''आपन्नसत्वा स्याद्गुर्विण्यन्त-र्वत्नी तु गर्भिणी'' इत्यमरः । कामिनी इव विलसतितरां अत्यन्तं शोभते ॥ स्वर्णवर्ण-प्राकार एव पीतवासोवत्, अन्तः श्रीकृष्ण एव सारगर्भवत् तद्युक्ता द्वारका गुर्विणीवत् भासत इति भावः । अत्र उपमा ।

ದ್ವಾರಕೆಯ ಸುತ್ತ ಕಣ್ಣಿಗೆ ಆಕರ್ಷಣೆಯಾದ ಕೋಟೆಯಿದೆ. ನಡುವೆ ಕಬ್ಬಿಣವನ್ನು ತುಂಬಿಸಿ, ಬಂಗಾರವನ್ನು ಲೇಪಿಸಿದ, ಮಾರುಗಟ್ಟಲೆ ಅಗಲವಾದ, ವಜ್ರದಂಥ ಗಡುಸಾದ ಶಿಲೆಗಳಿಂದ ಆ ಕೋಟೆ ನಿರ್ಮಿತವಾಗಿದೆ. ಸುವರ್ಣವರ್ಣದ ಆ ಕೋಟೆಯನ್ನು ಸುತ್ತುಕೊಂಡಿರುವ ಶ್ರೀ ಕೃಷ್ಣನ ದ್ವಾರಕೆಯಂತೂ, ಹಳದಿ ಸೀರೆಯುಟ್ಟಿರುವ ತುಂಬಿದ ಗರ್ಭಿಣಿಯಂತೆ ತೋರುತ್ತದೆ. (ಗರ್ಭಿಣಿಯ ಗರ್ಭದಲ್ಲಿರುವ ಗಂಡುಕೂಸಿನಂತೆ ದ್ವಾರಕೆಯ ಒಳಗೆ ಶ್ರೀ ಕೃಷ್ಣನಿರುವನೆಂದು ಭಾವವು)

With the surrounding fort formed by such boulders which are diamond-like hard, golden coloured, meters together wide with the casting of iron,the city Dwaraka attracts eyes, like a complete pregnant woman, who is bearing a great soul at her womb & wearing a yellow saree.(In respect of Dwaraka, the great soul

is nothing but Lord Krishna, and the saree is nothing but the golden colored fort.)

**प्राकाराग्रे कलयसि दृशा खे जयन्तीं पताकां**
**यष्टिर्यस्याः कनकखचिता चञ्चलेवावभाति ॥**
**चित्रं चेतश्चलमिव भयाद्विप्र यस्यां रिपूणां**
**चित्रं रूपं चलनमकरोद्यादवेन्द्रप्रभावात् ॥ ३ ॥**

**प्राकारग्र इति ।** विप्र! यस्याः पताकायाः । कनकेन सुवर्णेन खचिता । चञ्चला यष्टिः ध्वजदण्डः । ''यष्टिर्भार्ग्यां मधुयष्ट्यां ध्वजदण्डेऽस्त्रहारयोः'' इति हेमः । चञ्चला इव विद्युत् इव । ''तडित्सौदामिनी विद्युच्चञ्चला चपला'' इत्यमरः । अवभाति । अव इत्युपसर्गपूर्वकात् भा दीप्तौ इत्यतः लट् । यादवेन्द्रस्य श्रीकृष्णस्य प्रभावात् शक्तिविशेषात् । ''शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजा'' इत्यमरः । भयात् । रिपूणां चलं चेत इव । यस्यां पताकायां विद्यमानं चित्रं आलेख्यम् । '' आलेख्याश्चर्ययोश्चित्रं '' इत्यमरः । चित्रं रूपं विचित्रस्वरूपम् । शबलरूपं वा । ''चित्रं किर्मीरकल्माषशबलैताश्च कर्बुर'' इत्यमरः । चलनं च । अकरोत् । ध्वजस्थचित्रचलनं रिपुचित्तचाञ्चल्यसदृशमिति भावः । तां जयन्तीं पताकां विजयध्वजम् । ''पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम् '' इत्यमरः । प्राकाराग्रे पुरद्वाराग्रभागे । खे आकाशे । दृशा कलयसि पश्यसीत्यर्थः ॥ अत्र उपमा ।

ಕೋಟೆಯ ಮೇಲೆ ಕಣ್ಣು ಹಾಯಿಸು. ಮುಗಿಲು ಮುಟ್ಟಿದ ವಿಜಯ ಧ್ವಜವು ಕಾಣಿಸುತ್ತದೆ. ಅದರ ಬಂಗಾರದ ಕೋಲು ಮಿಂಚಿನಂತೆ ಚಂಚಲಿಸಿರುತ್ತದೆ. ಶ್ರೀ ಕೃಷ್ಣನ ಪ್ರಭಾವಕ್ಕೆ ಶತ್ರುಗಳ ಮನಸ್ಸು ಭಯಗೊಂಡು ನಡುಗುವುದನ್ನು ಪ್ರತಿಬಿಂಬಿಸುವಂತೆ, ಆ ಧ್ವಜದ ಚಿತ್ರವು ಹಾರಾಡುತ್ತ ವಿಚಿತ್ರ ರೂಪ ಪಡೆದಿರುತ್ತದೆ.

You will see such a victory flag, hoisted on the top of the fort, whose golden stag is shining like the lightening.The picture drawn on this flag, acquires the oscillation & freakiness, like the minds of enemies, which are trembling with the fear of Krishna's power.

**द्वाराण्यस्याः कुरु नयनयोर्ब्राह्मणातिथ्यवन्ति**
**प्रोतस्वर्णागणितमणिमत्तोरणालङ्कृतानि ॥**
**उन्मीलन्ति द्विषदभिसरं प्रेक्षितुं द्वारपाणां**
**नेत्राणीवाविरलविलसत्पक्ष्मपङ्क्तीनि यानि ॥ ४ ॥**

**द्वाराणीति** । हे ब्राह्मण ! प्रोतः स्वर्णः येषु तानि । अगणितानि मणिमन्ति यानि द्वाराणि । अविरला विलसन्त्यः पक्ष्मणां अक्षिलोम्नां पङ्क्तयः येषु तानि । ''पक्ष्माक्षिलोम्नि किञ्जल्क'' इत्यमरः । द्वारपाणां नेत्राणि इव । द्विषतां रिपूणां अभिसरः सहायः यथा भवति तथा तदभिमुखमिति यावत् । प्रेक्षितुं उन्मीलन्ति । उत् इत्युपसर्गपूर्वकात् मील निमेषण इति धातोः लट् । यथा हि रिपुसमागमे वीरा नेत्राणि उन्मीलन्ति तथा द्वाराण्यपीति भावः । नेत्रे अविरलपक्ष्मपङ्क्तिवत् द्वाराग्रेऽपि तोरणालङ्कार इति ज्ञेयम् । रिपुणां पुरतः अधीरा हि नेत्रं पिदधते । धीरास्तु नेत्रमुन्मीलन्ति इति हि स्थितिः । एवमेव द्वारविषये । द्वारकायां रिपूणां पुरतः अपि नेत्रद्वारोभयोद्धाटनेन द्वारपाणां पराक्रमातिशयो द्योत्यते । एवं विप्रस्य तव प्रवेशोऽपि सुगम इति भावः । तानि अस्या द्वारकाया द्वाराणि नयनयोः आतिथ्यवन्ति कुरु इति भावः । पुरस्य चतुर्दिक्ष्वपि द्वारसत्वात् द्वाराणीत्युक्तम् । सर्वत्रापि एकरूपा स्थितिरिति च भावः। अत्र पर्यायोक्तालङ्कारः । उपमा ।

ಓ ಬ್ರಾಹ್ಮಣ ! ಆ ಊರಿನ ಕೋಟೆಯ ಬಾಗಿಲು ನಿನ್ನ ಕಣ್ಣಿಗೆ ಅತಿಥಿಯಂತಾಗಲಿ. ಬಂಗಾರದ ತಂತಿಯಲ್ಲಿ ಪೋಣಿಸಿದ ಪಚ್ಚೆಯ ತೋರಣದಿಂದ ಸಿಂಗಾರಗೊಂಡ ಆ ಬಾಗಿಲನ್ನು ನೋಡಿದಷ್ಟು ನೋಡಬೇಕೆಂದೆನಿಸುತ್ತದೆ. ಶತ್ರುವೇ ಎದುರಾಗಿ ಬಂದರೂ ಆ ಬಾಗಿಲು ತೆರೆದೇ ಇರುತ್ತದೆಯಂತೆ. ಒತ್ತಾಗಿ ರೋಮಸಾಲುಳ್ಳ ರೆಪ್ಪೆಯನ್ನು ಸದಾ ತೆರೆದು ಶತ್ರುಗಳನ್ನು ದಿಟ್ಟಿಸಿ ನೋಡುವ ಕಾವಲುಗಾರರ ಕಣ್ಣಿನಂತೆ ತೋರಣಾಲಂಕೃತವಾದ ಆ ಬಾಗಿಲು ತೋರುತ್ತದೆಯಂತೆ.

Oh Brahmin! Provide hospitality of your eyes to those doors of fort, which are decorated with festoons of emeralds threaded with golden strings. These doors are open even in front of the enemies like the eyelids, with thick eyelash, of doorkeepers. (Here, the poet compares doors with eyelids & festoons with eyelashes.)

वीथ्यो यस्यां क्रमपरिसृतैः पुष्पिणीभिर्लताभिः
श्लिष्टैर्वृक्षैः परिसुरभिताः पार्श्वयोर्दर्पणाभाः ॥
पुष्पव्रातस्फुटपरिमलैः कुन्तलैः पार्श्वलोलैः
वक्रप्रान्तैरिव मृगदृशां भान्ति सीमन्तलेखाः ॥ ५ ॥

**वीथ्य इति** । यस्यां द्वारकायाम् । पार्श्वयोः । क्रमपरिसृतैः एकस्यानन्तरमेक इति क्रमेण विस्तृतैः । पुष्पिणीभिः लताभिः आश्लिष्टैः वृक्षैः । परिसुरभिताः परितः सुगन्धिताः। दर्पणाभाः दर्पणवत् स्वच्छाः । वीथ्यः । पुष्णाणां व्रातेन गुच्छेन स्फुटः परिमलः येषु तैः । पार्श्वयोः लोलैः चञ्चलैः । वक्रः प्रान्तः अग्रभागः येषु तैः कुन्तलैः । परिसुरभिताः मृगदृशां सुन्दरीणां सीमन्तलेखा इव भान्ति । यथा हि स्त्रीणां शिरसि सीमन्तलेखा लम्बिता अवक्रा स्वच्छा पार्श्वयोः पुष्पालङ्कृता केशस्निग्धा एवमेव द्वारकावीथ्यपि स्वच्छा अवक्रा पार्श्वयोः पुष्पितलताश्लिष्टवृक्षसान्द्रेति भावः । द्वारकायां सर्वत्र सुमङ्गलस्त्रिय एव सन्ति न कापि विधवेति च भावो द्योतते । अस्या द्वारकाया इति पूर्वेणान्वयः । अत्र उपमा ।

ದ್ವಾರಕೆಯ ದಾರಿಗಳು ಕನ್ನಡಿಯಂತೆ ಹೊಳೆಯುತ್ತವೆ. ಎರಡು ಬದಿಗೂ ಸಾಲಾಗಿ ಹರಡಿಕೊಂಡಿರುವ, ಹೂ ಬಿಟ್ಟ ಬಳ್ಳಿಗಳೊಡನೆ ಒತ್ತಾದ ಮರಗಳು ಸುಂಗಧ ಬೀರುತ್ತವೆ. ಹೂ ಮುಡಿದು ಸುವಾಸನೆ ಬೀರುವ, ತುದಿಯಲ್ಲಿ ಡೊಂಕಾದ ಗುಂಗುರು ಕೂದಲುಗಳ ನಡುವೆ, ಸ್ತ್ರೀಯರ ಬೈತಲೆ ಹೊಳೆವಂತೆ ಆ ದಾರಿಗಳು ತೋರುತ್ತವೆ.

Having the fragrance from the dense and lined trees on both sides, which are embraced by the flower creepers, the mirror like roads of Dwaraka, look like the lines parting the forelock of women which similarly have thick fragrant-flower & curly hairs on both sides.

सन्त्यारामा विविधकुसुमानोकहा यत्र रम्याः
उद्यानश्रीर्हसति कुसुमैः राजमानेव फुल्लैः ॥
गुञ्जद्भृङ्गीमधुरनिनदैष्टङ्कृतैः पञ्चबाणः
यूनां चेतो धुवति विशतामक्षयैः सायकौघैः ॥ ६ ॥

**सन्तीति** । यत्र आरामेषु । राजमाना उद्यानश्रीः वनदेवता । फुल्लैः कुसुमैः हसतीव अस्ति । हसे हसने लट् । यत्र पञ्चबाणः मन्मथः । 'कामः पञ्चशरः स्मरः' इत्यमरः । गुञ्जन्तीनां भृङ्गीनां मधुरनिनदैः मधुरनादरूपैः । टङ्कृतैः[१] टङ्कारैः । धनुषः ज्याकर्षेण जायमानो नादष्टङ्कारः । अक्षय्यैः अपरिमितैः । सायकौघैः बाणसमूहैः । "शरे खड्गे च सायक" इत्यमरः। मन्मथशरास्तु पुष्पाण्येव । तैरित्यर्थः । विशतां प्रविशताम् । यूनां । चेतः मनः । धुवति कम्पयति । धू विधूनने लट् । तादृशाः । विविधानि कुसुमानि येषां तादृशा अनोकहा वृक्षा येषु तादृशाः । 'अनोकहः कुटः साल' इत्यमरः । आरामा उपवनानि । "आरामः स्यात् उपवनं कृत्रिमं वनमेव तत्" इत्यमरः । सन्ति । द्वारकायामिति शेषः । अथ वा यत्र द्वारकायां सन्ति अस्या द्वारकाया इति पूर्वेणा-न्वयः ।। आरामेषु प्रविशतां यूनां पुष्पवृष्टिर्भवतीति भावः । अत्र हसतीव इत्युत्प्रेक्षा । मधुरनिनदैष्टङ्कृतैरिति रूपकम् । अक्षय्यैः सायकौघैरित्यतिशयोक्तिः ।

ಅಲ್ಲಿಯ ಉದ್ಯಾನದಲ್ಲಿ ನಾನಾ ವಿಧ ಮರಗಳು, ವಿಧ ವಿಧದ ಹೂಗಳಿರುತ್ತವೆ. ಆ ಹೂಗಳು ಅರಳಿದರೆ, ಉದ್ಯಾನವನದೇವತೆ ಕಿರುನಗೆ ಬೀರುವಂತೆ ಸೊಬಗು. ಅಲ್ಲಿ ಒಳ ಬರುವ ತರುಣ ಜನರ ಮನಸ್ಸಿಗೆ, ಮನ್ಮಥನು ದುಂಬಿಗಳ ಗುಂಗಾಟವೆಂಬ ಬಿಲ್ಲಿನ ಟಂಕಾರದೊಡನೆ ಅಪಾರ ಹೂಬಾಣಗಳಿಂದ ಚುಚ್ಚುತ್ತಾನಂತೆ.

At Dwaraka, there are many beautiful gardens full of flowering trees, where the Goddess of gardens looks like laughing through the blossomed flowers. And the cupid pierces the hearts of the entering youths by the arrows of inexhaustible flowers with the melodious sound from humming bees as the twang of bow-string.

**मध्ये राजत्यमलसरलो राजमार्गो यदूनां**
**यातायाताकलितनियमो लम्बितो द्वारकायाः ।।**
**यत्र स्त्रीणां कुटिलमनसामाविलानां नराणां**
**स्पर्शो नैवोत्तममृगदृशां कण्ठसंश्लिष्टहारे ।। ७ ।।**

---

१. टङ्कृतैरिति ।। टमिति अव्यक्तशब्दस्य कृतं करणम् । भावे क्तः ।

**मध्य इति** । यत्र राजमार्गे । उत्तममृगदृशां स्त्रीणां कण्ठसंश्लिष्टहारे। कुटिलमनसां कुचेष्टासक्तहृदाम् । आविलानां कालुष्यवताम् ।''कलुषोऽनच्छ आविल'' इत्यमरः । नराणां यूनामिति भावः । स्पर्शः नैव । भवतीति शेषः । तादृशः । अमलश्चासौ सरलः अवक्रश्च । ''सरलः पूतिकाष्ठे नाथोदारावक्रयोस्त्रिषु'' इति मेदिनी । यातायातानां गतानामागतानां च अकलितः नियमः निर्बन्धः यत्र तादृशः । [1]यातायातयोर्गत्या-गत्योरिति वार्थः । लम्बितः सुदीर्घः। यदूनां राजमार्गः । द्वारकाया मध्ये राजति । राजृ दीप्तौ लट् । अस्मिन् राजमार्गे गमनागमननिर्बन्धविरहात् क्वचित् कुटिलतरुणैः सञ्चलत्-स्त्रीतनुस्पर्शचिकीर्षया कुचेष्टायां कृतायामपि मार्गस्य विशालत्वात् स्त्रीणां तत्परिणामो न भवतीति भावः । अत्र मार्गविशालताया प्रकारान्तरेण प्रतिपादनात्पर्यायोक्तम् ।

ದ್ವಾರಕೆಯ ನಟ್ಟನಡುವೆ ನೇರ ರಾಜಮಾರ್ಗವಿದೆ. ಅಲ್ಲಿ ಗಮನ - ಆಗಮನಗಳಿಗೆ ಯಾವುದೇ ಅಡೆ ತಡೆಗಳಿಲ್ಲ. ದಿಟ್ಟಿಸಿ ನೋಡಿದರೂ ಅದರ ತುದಿ ಕಾಣುವುದೇ ಇಲ್ಲ. ಮತ್ತೆ, ಕೆಟ್ಟಕೀಟಲೆಯ ಪುಂಢ ಹುಡುಗರಿಗೆ, ಚೆಲುವ ಮೃಗನಯನೆಯರ ಕೊರಳ ಸುತ್ತ ಹಾರಾಡುವ ಹಾರವನ್ನು ತಾಕಿಸಲೂ ಸಹ ಅಲ್ಲಿ ಆಗುವುದೇ ಇಲ್ಲ. ( ಇನ್ನು ಮೈ ಮುಟ್ಟಲು ಸಾಧ್ಯವಾದೀತೆ ? ಹೀಗೆ ಆ ಯಾದವರ ರಾಜಮಾರ್ಗ ಬಹಳ ವಿಶಾಲ.)

In the middle of Dwaraka, there runs a long royal road, which is clean, evenly leveled & has no restrictions for going & coming. The road is so wide that even the garlands surrounding the neck of the fawn-eyed ladies can never be touched by the mischievous youths.

**मार्गे गच्छन् कलयसि दृशा सांयुगीनप्रशस्यं**
**युद्धक्रीडाभ्यसनसदनं स्वःकवाटं भटानाम् ॥**
**दृष्ट्वा क्लीबा अपि सपुलकोज्जृम्भमाणप्रतीकाः**
**वीरोद्घोषं विदधति मुहुर्धीरतारं यदारात्** ॥ ८ ॥

**मार्ग इति** । हे ब्राह्मण ! यत् यादृशं युद्धक्रीडाभ्यसनम् आरात् दूरतः । दृष्ट्वा अपि केवलं दर्शनादेव । क्लीबा अपि षण्ढा अपि । 'क्लीबःषण्ढो नपुंसकम्' इत्यमरः ।

१. यातायातेति ॥ भावे क्तः ।

पुलकेन सहितः उज्जृम्भमाणः प्रतीकः शरीरावयवः येषां तादृशाः सन्तः । धीरतारं धैर्योपेतं उच्चस्वरोपेतम् । वीराणां उद्धोषं विदधति । तादृशम् । सांयुगीनेन युद्धकुशलेन प्रशस्यम् । ''सांयुगीनो रणे साधुः'' इत्यमरः । सेनापतिप्रशस्यमिति यावत् । भटानां योधानाम् । स्वःकवाटं स्वर्गद्वारम् । युद्धक्रीडाभ्यसनस्य सदनम् । मार्गे गच्छन् त्वं दृशा कलयसि प्राप्नोषि । युद्धाभ्यासशालाया दर्शनमात्रेण क्लीबानामप्येवं वीरघोषश्चेत् किमुत वीरपुरुषाणां तत्रस्थानां पराक्रमातिशयो वक्तव्य इति भावः । पुरात् बहिः युद्धाभ्यास-शाला स्यादिति प्रविशतः विप्रस्य सैव प्रथमतो दृश्यत इति भावः। अत्र गम्यार्थापत्तिः ।

ಆ ಮಾರ್ಗದಲ್ಲಿ ಸಾಗುವಾಗ ಕಾಳಗದ ಅಭ್ಯಾಸ ಶಿಬಿರ ನಿನಗೆ ಕಾಣಿಸುತ್ತದೆ. ದಂಡನಾಯಕನಿಗೆ ಆ ತಾಣ ಬಹಳ ಅಚ್ಚುಮೆಚ್ಚು, ಸೈನಿಕರಿಗೆ ಸ್ವರ್ಗದ್ವಾರವಂತೆ. ಅದನ್ನು ದೂರದಿಂದ ನೋಡಿದರೂ ಹೇಡಿಗಳೂ ಕೂಡ ಪುಳಕಗೊಂಡು ಮೈ ಉಬ್ಬಿಸಿ, ಝೋರಾಗಿ ವೀರ ಘೋಷ ಮಾಡುತ್ತಾರಂತೆ.

Moving on the highway, you will see the school of war practice that is the door of heaven for soldiers & it is praised by all the commanders. The mere view of this from far, even impotents get thrilled & and with their chest expanded with pride, they make loud and powerful noise of bravery.

**किञ्चिद्दूरं परिसर ततो दृश्यते हस्त्यगारं**
**भृङ्गीगुञ्जारवमुखरितं दानगन्धप्रसारम् ॥**
**यस्मिन् दन्ता वियति मुदिरैर्मेदुरे शुभ्रभानोः**
**लेखायन्ते द्विज करटिनामिन्द्रनीलप्रभाणाम् ॥ ९ ॥**

युद्धशालानन्तरं युद्धाङ्गगजवाजिशालां वर्णयति **किञ्चिदिति** । हे द्विज ! किञ्चित् दूरं स्वल्पदूरं परिसर अग्रतो गच्छ । परीत्युपसर्गपूर्वकात् सृ गतौ इति धातोः लोट् । यस्मिन् यादृशे हस्त्यगारे । इन्द्रनीलवत् प्रभा येषां तादृशानाम् । करटिनां गजानाम् । करटस्य गजगण्डत्वेन करटी गजः । ''करटो गजगण्डे स्यात्'' इति मेदिनी । दन्ताः । मुदिरैः मेघैः । '' घनजीमूतमुदिरजलमुग्धूमयोनयः'' इत्यमरः । मेदुरे सान्द्र-स्निग्धे । ''सान्द्रस्निग्धस्तु मेदुरः'' इत्यमरः । वियति आकाशे । शुभ्रभानोः चन्द्रस्य ।

लेखायन्ते[1] लेखवत् द्वितीयाचन्द्रवत् आचरन्ति । तादृशम् । भृङ्गीनां गुञ्जारवेण मुखरितम् । दानस्य गजमदरसस्य । यो गन्धः तस्य प्रसारः यस्मिन् तादृशम् । ''दानं गजमदे त्यागे'' इति मेदिनी । हस्त्यगारं गजशालाम् । ''दन्ती दन्तावलो हस्ती'' इत्यमरः । ''भवनागारमन्दिरम्'' इति च । दृश्यते । त्वयेति शेषः । अत्र उपमा ।

ಸ್ವಲ್ಪ ದೂರ ಸಾಗು, ಗಜಶಾಲೆ ಕಾಣಿಸುತ್ತದೆ. ಅಲ್ಲಿ ಗೂಂಗೆರೆವ ಜೇನುರಾಣಿಯ ನಾದ ತುಂಬಿಬರುತ್ತದೆ. ಆನೆಗಳ ಗಂಡಸ್ಥಳದಿಂದ ಇಳಿದ ಮದರಸದ ವಾಸನೆ ಎಲ್ಲೆಡೆ ಪಸರಿಸುತ್ತದೆ. ಮೋಡಕವಿದ ದಟ್ಟ ಆಗಸದಲಿ ಬಿದಿಗೆ ಚಂದಿರನ ಗೆರೆ ಮೂಡುವಂತೆ, ಇಂದ್ರನೀಲ ಮಣಿಯಂತೆ ಕಪ್ಪಾದ ಆ ಆನೆಗಳ ಧವಳ ದಂತಗಳು ತೋರುತ್ತವೆ.

Oh Brahmin, proceed little further, you will find a stable of elephants which is filled with the smell of the juice exuded from the temples of elephants in rut, and therefore filled with the humming noise of bees. The ivories of the sapphire-like elephants look like the digit of the moon in the dark clouded sky.

**तस्याप्यारात्पतति भगवन् चक्षुषः पद्धतौ ते**
**हेषारावोन्मुखरितहरिन्मण्डला वाजिशाला ॥**
**मध्ये मेया उरसि विगलन्मानिनः स्तब्धकर्णाः**
**वाहा रंहोविजितमरुतो विप्र राजन्ति यत्र** ॥ १० ॥

**तस्येति** । हे भगवन् पूज्य ! मध्ये मेया ज्ञेयाः सन्तः । उरसि वक्षस्थले । विगलत् संख्यातुं अशक्यं मानं वितस्त्यादिपरिमाणविशेषः एषां अस्तीति तादृशाः[2] । स्तब्धकर्णाः । रंहसा वेगेन विजितो मरुत् यैस्तादृशाः । वाहा अश्वाः । यत्र यादृशवाजिशालायां राजन्ति । तादृशी हेषारावेण अश्वकृतशब्देन उन्मुखरितं हरिन्मण्डलं दिङ्मण्डलं यस्याः सा वाजिशाला अश्वशाला । तस्यापि हस्त्यगारस्यापि । आरात् समीपे । ते चक्षुषः पद्धतौ पतति । त्वया दृश्यत इति भावः ।

---

१. लेखायन्ते इति ॥ कर्तुः क्यङ् सलोपश्च (३-१-११) इति क्यङ् ॥
२. विगलन्मानिन इति ॥ अत इनि ठनौ (५-२-११५) इति इनिः ॥

ಮುಂದೆ ಅದರ ಸನಿಹವೆ ಕುದುರೆಗಳ ಲಾಯವಿದೆ. ಸುತ್ತ ದಿಸೆ ದಿಸೆಗೂ ಪ್ರತಿಧ್ವನಿಗೈಯುವಂತೆ ಅಲ್ಲಿಯ ಕೆನೆವ ಶಬ್ದ ತುಂಬಿ ಬರುತ್ತದೆ. ಅಲ್ಲಿ ಊಹಿಸಿ ತಿಳಿಯಬಹುದಾದ ನಡುಭಾಗವುಳ್ಳ, ಅಳೆಯಲಾಗದಂತೆ ಬೆಳೆದ ಎದೆಯುಳ್ಳ ಆ ಕುದುರೆಗಳು ಕಿವಿ ನಿಮಿರಿಸಿರುತ್ತ ಓಡಿದಾಗ, ಅದರ ವೇಗಕ್ಕೆ ಗಾಳಿಯೂ ಸೋಲುಣ್ಣುತ್ತಾನೆ.

Nearby this, you will see the stable of horses, which is the source of neighing that is, filled in all directions. In that stable you will find the horses, which have large chests & straightened ears, can beat the tempest in speed.

**पश्चादस्याः कलय नयनं दृश्यते मल्लशाला**
**गाङ्गेयानां निकष इव या मल्लविद्याबलानाम् ॥**
**व्यायामोत्थो वपुषि विसरद्धर्मवारां प्रवाहः**
**यस्यां मुक्ताशकलमहसां निर्झरीणामिवाद्रौ ॥ ११ ॥**

**पश्चादिति** । हे विप्र ! अस्याः वाजिशालायाः । पश्चात् अनन्तरम् । पुरत इति भावः। नयनं कलय संयोजय । पश्येत्यर्थः । यस्यां यादृश्यां मल्लशालायाम् । व्यायामेन उत्थः । वपुषि शरीरे मल्लानामिति शेषः । विसरतां घर्मवारां स्वेदाम्बुनाम् । प्रवाहः । अद्रौ शैले । मुक्ताशकलस्य मुक्ताखण्डस्य मह इव महो यासां तासाम्[१] । निर्झरीणां उन्नतस्थानात् पततां जलप्रवाहाणाम् । ''वारिप्रवाहो निर्झरो झर'' इत्यमरः । ङीषि निर्झरीति । प्रवाह इव अस्ति इति शेषः । एवं, गाङ्गेयानां सुवर्णानाम् । ''गाङ्गेयः स्यात् पुमान् भीष्मे क्लीबं स्वर्णकशेरुणोः'' इति मेदिनी । निकष इव परीक्षणपाषाणवत् । ''शाणस्तु निकषः कषः'' इत्यमरः । मल्लविद्याबलानां या यादृशी शाला । परीक्षणार्थं वर्तत इति शेषः । सा मल्लशाला दृश्यत इति । अत्र उपमा ।

ಅದಾದ ಮೇಲೆ ಮಲ್ಲರ ಗರಡಿ ಮನೆ ಕಾಣುತ್ತದೆ. ಅಪರಂಜಿ ಚಿನ್ನಕ್ಕೆ ಒರೆಗಲ್ಲಿನಂತೆ, ಆ ಮನೆಯೇ ಜಟ್ಟಿಗಳ ಕುಸ್ತಿಯಾಟದ ಕಸುವೆಂಬ ಬಂಗಾರದ ಪರೀಕ್ಷೆಗೆ ಒರೆಗಲ್ಲಿನ ಸ್ಥಳವಾಗಿದೆ. ಅಲ್ಲಿ ವ್ಯಾಯಾಮದಿಂದ ಮಲ್ಲರ ಮೈಮೇಲೆ ಹೊರ ಹೊಮ್ಮಿದ ಬೆವರಧಾರೆ, ಬೆಟ್ಟದಿಂದ ಹರಿದು ಬರುವ, ಸೀಳುಮುತ್ತಿನಂತೆ ಹೊಳೆವ, ಝರಿಯ ಹಾಗೆ ತೋರುತ್ತದೆ.

---

१. मुक्ताशकलमहसामिति ॥ सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च इति वार्तिकात् समासः ॥

After this, you will find the gymnasium, which is the determining place of wrestling strength, like a touchstone to gold. There the sweat flowing from the wrestler' bodies due to the physical exercises looks like a pear-like bright cascade flowing from a mountain.

**ब्रह्मन्नस्या लसति सविधे नृत्यसङ्गीतशाला**
**गीते कम्पः कलयति मनःकम्पमाकर्णयत्सु ॥**
**यत्र स्त्रीणां सपृथुलकुचं नर्तनं प्रेक्षकाणां**
**साङ्गोपाङ्गं स्मृतिमतिगतं नर्तयत्यन्तरङ्गम् ॥ १२ ॥**

**ब्रह्मन्निति** । हे ब्रह्मन् ! यत्र यादृशसङ्गीतशालायाम् । गीते कम्पः । आकर्णयत्सु श्रोतृषु । मनःकम्पं कलयति । एवं, स्त्रीणां सपृथुलकुचं विस्तृतवक्षःप्रदर्शनसहितमिति भावः । साङ्गोपाङ्गं नर्तनम् । प्रेक्षकाणां अन्तरङ्गम् । स्मृतिं अतिगतं[१] सत् नर्तयति । नृती गात्रविक्षेपे णिचि लट् । सा नृत्यसङ्गीतशाला । अस्याः मल्लशालायाः । सविधे समीपे । लसति शोभते लस श्लेषणक्रीडनयोर्लट् । श्राव्यसङ्गीतकम्पः श्रोतृमनःकम्पं, दृश्यं च नर्तनं द्रष्टृमनोनर्तनं कारयतीति भावः । अत्र उल्लासः । गीतस्य गुणेन कम्पेन श्रोतृमनसि कम्पनरूपतद्गुणाधानात् । कुचयोः नर्तनेन द्रष्टृहृदये नर्तनाधानादिति ।

ಓ ಬ್ರಾಹ್ಮಣ ! ಅದರ ಹತ್ತಿರವೆ ನೃತ್ಯಶಾಲೆ–ಸಂಗೀತಶಾಲೆ ಇದೆ. ಅಲ್ಲಿಯ ಸಂಗೀತ ಕಂಪನಕ್ಕೆ ಕೇಳುಗರ ಮನಸ್ಸು ಕಂಪನಗೊಳ್ಳುತ್ತದೆ. ಅಲ್ಲಿಯ ರಂಗಸ್ಥಳದಲ್ಲಿ, ಸ್ತನ ಅರಳಿಸಿ ಸಾಂಗೋಪಾಂಗವಾಗಿ ಸ್ತ್ರೀಯರು ಕುಣಿವುದಂತೂ ನೋಡುಗರ ಮನಸ್ಸನ್ನು ಕುಣಿದಾಡಿಸುತ್ತದೆ. 'ಎಲ್ಲಿ ಇದ್ದೇವೆ ?' ಎಂಬ ನೆನಪನ್ನೇ ಅಳಿಸಿ, ಮೈ ಮರೆಸುತ್ತದೆ.

Oh Brahmin! Close to the gymnasium, you will find the school of music & dance, wherein the vibration of music creates vibration in the minds of listeners. The dance, which is complete in all respects, of the women with blossomed bosoms, makes to dance the hearts of viewers, forgetting themselves.

---

१.स्मृतिमतिगतमिति ॥ अतिक्रान्तमित्यर्थः ॥

उच्चैःसामस्वरमुखरितं विप्रवर्याग्रहारं
मार्गे गच्छन् कलयसि दृशा शास्त्रचर्चाप्रचारम् ॥
मन्ये यत्राहुतघृतमुहुःसेवनाजीर्णवह्न्यु-
द्वान्ता धूमा व्यदधुरसितं लक्षणं शुभ्रभानौ ॥ १३ ॥

**उच्चैरिति** । हे विप्रवर्य ! यत्र यादृशाग्रहारे । आहुतस्य अतिशयेन होमे त्यक्तस्य घृतस्य मुहुःसेवनेन पुनः पुनः स्वीकारेण अजीर्णेन वह्निना उद्वान्ता धूमाः । शुभ्रभानौ चन्द्रे । असितं कृष्णम् । लक्षणं चिह्नम् । व्यदधुः अकुर्वन् । वि इत्युपसर्गपूर्वकात् डुधाञ् धारणपोषणयोः इति धातोः लङ् । इति मन्ये । तादृशम् । उच्चैः यथा भवति तथा साम्नां स्वरैः मुखरवत् मुखव्यापाररतवत् आचरितम्[१] । शास्त्रचर्चाया प्रसारः यस्मिन् तादृशम् । मार्गे गच्छन् त्वं दृशा कलयसि । पश्यसीत्यर्थः । यथा हि महानसे वह्न्युत्पन्नधूमतः ऊर्ध्वभित्त्यादौ असितचिह्नं भवति । तथा यज्ञहोमादिवह्निधूमतः चन्द्रे कलङ्क इति भावः । यद्यपि याज्ञियाग्रेर्धूमः नातीव भवति । वेणुधमन्यादिनाग्रेः प्रबोधविधानात् । अथापि धूमोत्पत्तिस्तु स्वीकृतघृताजीर्णत इति कविवर्णनेन तत्र यज्ञयागातिशयो ध्वन्यते । एवं नृत्यसङ्गीतशालाया दर्शनापेक्षया एतादृशाग्रहारदर्शने विप्रस्योत्साहातिशय इति भावेन पूर्वश्लोके दर्शनविचारमुपेक्ष्यात्रोक्तं तद्दर्शनमिति च भावो ध्वन्यते । अत्र उत्प्रेक्षा ।

ಓ ವಿಪ್ರವರ್ಯ ! ಅದೇ ದಾರಿಯಲ್ಲಿ ಸಾಗುವಾಗ ಬ್ರಾಹ್ಮಣರ ಅಗ್ರಹಾರ ಕಾಣಿಸುತ್ತದೆ. ಶಾಸ್ತ್ರ ಚರ್ಚೆಯ ವಿಚಾರ, ಸಾಮಗಾನದ ಉಚ್ಚ ಸುಸ್ವರ ಅಲ್ಲಿ ತುಂಬಿರುತ್ತದೆ. ಆ ಬ್ರಾಹ್ಮಣರು ಮತ್ತೆ ಮತ್ತೆ ನೀಡಿದ ತುಪ್ಪದ ಆಹುತಿಯನ್ನು ಅರಗಿಸಿಕೊಳ್ಳಲಾಗದೆ, ಅಗ್ನಿಯು ವಾಂತಿ ಮಾಡಿದ ಹೊಗೆಯ ಮಸಿಯಿಂದಲೇ ಶುಭ್ರ ಚಂದ್ರನಿಗೆ ಕಳಂಕ ಬಂದಿರಬಹುದೆಂದು ನನಗನ್ನಿಸುತ್ತದೆ.

Oh great Brahmin! Moving on the way, you will find an "Agrahara" dwelling place of Brahmins, which is filled with high notes of sound of Samaveda & scriptural discussions. I presume that, the black scar at the naturally clear moon is caused by the smoke vomited by the fire God because of the indiges-

---

१. मुखरितमिति ॥ मुखं मुखव्यापारं रातीति मुखरः । ततः आचारार्थे क्विपि क्तप्रत्ययः ॥



अग्रहारः (श्लोक – १३)

tion caused in him by the over-consumption of ghee offered by these Brahmins.

पण्यस्त्री वा कलयति रुचिं नूत्ननूत्नां वनाली
मन्दं मन्दं घनकुचतटे कामिनीनां करोति ॥
अध्वन्यानां कर इव सुखस्पर्शमारात्समीरः
द्वारावत्यां विलसति सदा चक्रवर्तीव कामः ॥ १४ ॥

एतावता प्रबन्धेन द्वारकां प्रविविक्षुणा पुरुषेण लप्स्यमानानेकस्थानानां वर्णनं विधाय, शृङ्गारकाव्यस्यास्यावश्यकं स्त्रीपुरुषलीलाविलासं द्वारकायां विशेषतो वाचयति कविर्भैष्मीमुखेन । **पण्यस्त्रीत्यादिना** । द्वारावत्यां द्वारकायाम् । वनाली वनश्रेणी । ''वीथ्यालिरावलिः पङ्क्तिः श्रेणी'' इत्यमरः । ङीषि आलीति रूपम् । पण्यस्त्री वा स्वविक्रयासक्तवेश्या इव । नूत्ननूत्नां[1] विनूतनायिताम् । रुचिं कान्तिम् । कलयति धरति । समीरः वायुः । अध्वन्यानां पथिकानां कामिनीनां स्त्रीणाम् । घनयोः सान्द्रयोः कुचयोस्तटे मन्दं मन्दं सुखस्पर्शं करोति । द्वारावत्यां कामः सदा चक्रवर्ती इव विलसति । वनदर्शने वायुस्पर्शने च काम उत्तेजितो भवतीति भावः । पुरुषाणां वन-दर्शनेन, स्त्रीणां वायुस्पर्शेनेति विवेकः । कामावतारस्य प्रद्युम्नस्य द्वारकायां उत्तरत्र यौव-राज्येन विलास इत्येतावन्न युक्तं अपि तु सदैव चक्रवर्तित्वमिति च भावो ध्वन्यते ॥ अत्र उपमा ।

ಆ ಊರಿನಲ್ಲಿ ಉದ್ಯಾನವನಸಿರಿಯ ಸೊಬಗಂತೂ ಕರವೇಣ್ಣನಂತೆ ನಿತ್ಯವಿನೂತನ. ನಡೆವ ಯುವತಿಯರ, ನಿಮಿರಿದ ಸ್ತನಗಳ ಮೇಲೆ ಗಾಳಿ ಮೆಲ್ಲ ಮೆಲ್ಲನೆ ಬೀಸುವುದು, ಪ್ರೇಮಿಯು ಕೈಯಾಡಿಸಿದಂತೆ ಸುಖಸ್ಪರ್ಶ ಮಾಡುತ್ತದೆ. ದ್ವಾರಕೆಯಲ್ಲಿ ಕಾಮನೇ ಚಕ್ರವರ್ತಿಯಂತೆ ಮೆರೆಯುತ್ತಿರುತ್ತಾನೆ.

There the boulevards are displaying ever-new charms like a call girl. The wind closely strikes, with a gentle touch like a hand, the bosom of the moving women. Thus, in Dwaraka, the god of love dominates like an emperor.

---

१. नूत्ननूत्नामिति ॥ प्रकारे गुणवचनस्य (८-१-१२) इति द्वित्वम् । अथवा नूत्नेषु नूत्नामतिनूत्नामित्यर्थः । मन्दं मन्दमित्यत्र तु मेघदूतवत् ज्ञेयम् ।

**यस्यां ब्रह्मन्नुरसि विशदे वल्लभानां तरुण्यः**
**पीनोरोजान् परिमललसत्स्वेदमुक्तापृषत्कान् ॥**
**घर्षं घर्षं परिसृतकचैर्वीजयन्त्यस्तृषार्ताः**
**चुम्बं चुम्बं सरसमधरं तोषमापादयन्ति ॥ १५ ॥**

कामराज्यशासनक्रममुपपादयति । **यस्यामिति** । हे ब्रह्मन् ! यस्यां द्वारकायां । तरुण्यः । परिमललसत्स्वेदा एव मुक्तापृषन्ति मुक्ताबिन्दवः येषु तान् । पीनोरोजान् पीनस्तनान्। वल्लभानां प्रेयसाम् । विशदे उरसि वक्षसि । घर्षं घर्षं[1] अतिशयेन घृष्ट्वा । परिसृतकचैः बाहुप्रदेशे संसृत्य विस्तारितैः केशैः वीजयन्त्यः सत्यः । तृषा वाञ्छया तद्द्योतकोदन्यया च आर्ताः । ''तृट् लिप्सायामुदन्यायां'' इति मेदिनी । वल्लभानां सरसं अधरं चुम्बं चुम्बं अतिशयेन चुम्बित्वा । तोषं रतिसुखं आपादयन्ति प्राप्नुवन्ति वल्लभान् प्रापयन्ति वेत्यर्थः । आङुपसर्गपूर्वकान् पदगतौ इत्यतः णिचि लट् । तादृश्यां द्वारकायां कामः चक्रवर्तीति पूर्वेणान्वयः । अत्र तृषार्ताया सरसार्थसंसर्ग अनुरूप इति समालङ्कारः। तृषार्ततोपपादकतया घर्षणवीजनयोः श्रमरूपव्यङ्ग्यार्थकत्वेन परिकरश्च।

ಪ್ರಿಯತಮನ ಅಗಲ ಎದೆಗೆ ಯುವತಿಯರೆಲ್ಲ ತಮ್ಮ ಉಬ್ಬಿದ ಸ್ತನಗಳನ್ನು ಘಟ್ಟಿಸುತ್ತಾರೆ. ಸುವಾಸನೆಯ ಬೆವರ ಹನಿಗಳನ್ನು ಮುತ್ತುಗಳಂತೆ ಉದುರಿಸುತ್ತಾರೆ. ಕೆಳಗಿಳಿದು ಹೆಗಲಮೇಲೆಲ್ಲ ಹರಡಿದ ಕೂದಲುಗಳಿಂದ ಗಾಳಿ ಬೀಸುತ್ತಾ, ಬಾಯಾರಿ ಬಳಲಿ ಆ ಯುವಕರ ರಸಮಯ ಕೆಂದುಟಿಯ ಹೀರುವಂತೆ ಮುತ್ತಿಡುತ್ತಾರೆ. ಅವರನ್ನು ಖುಷಿಪಡಿಸುತ್ತಾರೆ.

There, the young ladies rub with their plump breasts on the broad chests of their lovers and sprinkle the pearl-like aromatic sweat on them. Fanning with the spread hair and being exhausted with thirst, the ladies kiss juicy lips of their lovers again & again and enjoy.

**पादाम्भोजप्रसरणजवान्मुक्तनीवीनितम्बाः**
**श्वासोच्छ्वासश्रमभरवशात्स्रस्तवक्षोजशाय्यः ॥**

---

१. घर्षं घर्षमिति ॥ णमुलन्तमेतत् ।

यातायाताद्युवजनमनो लोलयन्त्यो निकामं
दोलारूढा इव कृतरतव्युत्क्रमा यत्र नार्यः ॥ १६ ॥

**पादेति ।** यत्र यादृशद्वारकायाम् । दोलारूढाः दोलायां अरूढाः । नार्यः । पादौ अम्भोज इव पादाम्भोजे तयोः प्रसरणस्य जवात् वेगात् । मुक्तौ परस्परासम्बद्धौ नीवीनितम्बौ यासां ताः सत्यः । श्वासोच्छ्वासयोः श्रमभरस्य वशात् स्रस्ता वक्षोजयोः स्तनयोः शायी आच्छादकवस्त्रं यासां ताः सत्यः । यातायातात्[१] गमनागमनतः । युवजनानां मनः निकामं लोलयन्त्यः सत्यः । कृतःरतव्युत्क्रमः याभिस्ता इव भवन्ति । तस्यां द्वारकायां कामश्चक्रवर्तीति पूर्वेणान्वयः । दोलायामुपविश्यपादायोः सञ्चलने सति नीवीबन्धः श्लथितो भवति । इतस्ततः दोलागमनारम्भे सम्भ्रमेण श्वासोच्छ्वासवेगः अधिको भवतीति ततश्च वक्षस आच्छादकं वस्त्रं गलितं भवति । एवं दोलायां पुरोभागोन्मुखायां स्वाभिमुखमुपविश्यागच्छन्ती च नारी व्युत्क्रमसुरतक्रीडावस्थासन्नद्धललनावदेव भासत इति भावः । अत्र मुक्तनीवीनितम्बत्वस्रस्तवक्षोजशायीत्वयोः गम्यहेतूत्प्रेक्षा पादेत्यादि । समर्थनीययुवजनमनोलोलनसमर्थनपटुत्वेन वक्षोजशाय्यादिविशेषणस्य काव्यलिङ्गत्वम् । दोलारूढ इति विशेषणव्यङ्ग्येन नारीणां लोलनेन युवजनमनोलोलनं चोल्लासः गम्यः । कृतरतव्युत्क्रमा इवेत्युत्प्रेक्षा ।

ಅಲ್ಲಿ ಜೋಕಾಲಿ ಏರಿ ಆಟವಾಡುವಾಗ ತರುಣಿಯರ ನೆರಿಗೆ ಗಂಟು, ಪಾದಚಲನೆಗೆ ಸಡಿಲಾಗಿ ಜಾರುತ್ತದೆಯಂತೆ, ಉಸಿರಾಟದ ರಭಸಕ್ಕೆ ಸಿಕ್ಕು ಸೆರಗೂ ಸಹ ಎದೆಯಿಂದ ಸರಿಯುತ್ತದೆಯಂತೆ. ಅದನ್ನು ನೋಡುವ ಯುವ ಜನತೆಯ ಮನಸ್ಸು ಅತ್ತ-ಇತ್ತ ಜೋಕಾಲಿಯ ತೂಗಾಟದಂತೆ ಹೊಯ್ದಾಡುತ್ತದೆಯಂತೆ. ಆಗ ಆ ಲಲನೆಯರು ತಿರುಗು-ಮುರುಗಾಗಿ ಸಂಭೋಗಕ್ರಿಯೆಯಲ್ಲಿ ತೊಡಗಿದಂತೆ ಅವರಿಗೆ ತೋರುವುದಂತೆ.

While the young ladies are playing the swing, the knots of the frills get loosened & slipped from their waists because of the speedy movements of their lotus-like legs and also the robes on the breasts get slipped due to the force of their breathing. Along with these, and also by swinging up & down, they swing the minds of the young men like women in reverse copulation

१. यातायातादिति ॥ समाहारद्वन्द्वः ।

स्वान्तायन्ते गतमलतया वारि योगीश्वराणां
वारीयन्तेऽमितसुखकरस्पर्शतो यत्र नार्यः ॥
नारीयन्ते रुचिरगतितो विप्र हंसा नगर्यां
हंसायन्ते सितरुचितया कामिनीमन्दहासाः ॥ १७ ॥

**स्वान्तायन्त इति** । यत्र नगर्यां यादृशद्वारकायाम् । वारि जलानि । वार्शब्दः अयम् । गतमलतया निर्मलत्वेन । योगीश्वराणां योगिवर्याणाम् । स्वान्तायन्ते हृदयवदाचरन्ति । एवम्, नार्यः स्त्रियः । अमितसुखकरस्पर्शतः वारीयन्ते[१] वारिवदाचरान्ति । एवम्, हंसाः रुचिरगतितः नारीयन्ते नारीवदाचरन्ति । एवम्, कामिनीनां मन्दहासाः । सिता रुचिर्येषां तत्वेन । हंसवत् आचरन्ति । तादृशद्वारकायां कामश्चक्रवर्तीति पूर्वेणान्वयः । वारि योगिमनस्त्वयुक्तं चेत् वारित्वं कुत्रेत्याशङ्कायाम् नार्या तदुक्तम् । नारीत्वं तु हंसानां चेत् हंसत्वं तादृशनारीमन्दहास इति कविभावः । अत्र शृङ्खलामूलोपमेयं मालोपमा मालादीपकवत् ।

ಅಲ್ಲಿ ನಿರ್ಮಲ ಸ್ವಭಾವದಿಂದ ನೀರೆಲ್ಲ ಯೋಗಿಗಳ ಮನಸ್ಸಿನಂತಾಗಿರುತ್ತದೆ. ಹಾಗಾದರೆ ನೀರಾವುದೆಂದರೆ, ಮೈ ಪುಳಕಿಸುವ ಸುಖಸ್ಪರ್ಶ ನೀಡುವುದರಿಂದ ನಾರಿಯರೇ ನೀರಿನ ಸ್ಥಾನ ಪಡೆದಿರುತ್ತಾರೆ. ಮತ್ತೆ ನಾರಿಯರಾರೆಂದರೆ, ಮೆಲ್ಲ ಮೆಲ್ಲನೆ ಸುಂದರ ಹೆಜ್ಜೆ ಇಡುವುದರಿಂದ ಹಂಸಗಳೇ ನಾರಿಯರಂತೆ ತೋರುತ್ತವೆ. ಹಾಗೆಯೆ, ಆ ನಾರಿಯರ ಕಿರುನಗೆಗಳೇ ಬೆಳ್ಳ ಹೊಳಪಿನಿಂದ ಹಂಸಗಳಂತೆ ಅಲ್ಲಿ ತೋರುತ್ತವೆ !

At Dwaraka, due the purity, the water looks like the minds of great sages; due to the pleasant touch, the women look like water; due to the beautiful stepping, the swans look like these women; due to the glittering whiteness, the smiles of the women look like these swans.

खेलन्तीनां निजकुचमितैः कन्दुकैः पुष्पगुच्छैः
नीवीबन्धश्लथनसुभगप्रेक्ष्यसीमन्तिनीनाम् ॥

---

१. वारीयन्ते नारीयन्त इति ॥ कर्तुः क्यङ् सलोपश्चेति क्यङ् । अकृत्सार्वधातुकयोरिति दीर्घः ॥

**स्पर्शं स्पर्शं कर इव मरुत् भाति शीतो विटानां**
**श्वासोच्छ्वासप्रहतिविचलच्चूचुकाग्रस्तनेषु ॥ १८ ॥**

**खेलन्तीनामिति ।** निजकुचमितैः स्ववृत्तस्तनोपमितैः । पुष्पगुच्छैः कन्दुकैः । खेलन्तीनां क्रीडासक्तानाम् । नीवीबन्धस्य श्लथनेन सुभगा इति प्रेक्ष्याणां सीमन्तिनीनां स्त्रीणाम् । श्वासोच्छ्वासयोः प्रहत्या विचलत् चूचुकाग्रं येषां तेषुस्तनेषु । स्पर्शं स्पर्शं अतीव स्पृष्ट्वा । शीतः मरुत् विटानां कर इव भाति । विटाः कामिनीकुचस्पर्शलोला इति प्रसिद्धिः । अत्र उपमा ।

ಅಲ್ಲಿ ದುಂಡುಮೊಲೆಯಂತೆ ಅಂದವಾದ ಚೆಂಡಿನಂತಿರುವ ಮಲ್ಲಿಗೆ ದಂಡೆಗಳನ್ನು ಕೈಗಳಿಂದಾಡಿಸುತ್ತ ನೆರಿಗೆ ಗಂಟು ಸಡಿಲಾದಷ್ಟು ಹೆಚ್ಚಾಗಿ ಸೌಂದರ್ಯದ ಸೊಬಗಿನತ್ತ ಎಲ್ಲರ ಕಣ್ ಸೆಳೆಯುತ್ತ, ಆಟ ವಾಡುವ ಚೆಲುವಿಯರು ಉಸಿರಾಟದ ತಾಕಾಟಕ್ಕೆ ಮೊಲೆತೊಟ್ಟು ನಡುಗಿಸುತ್ತಿದ್ದರೆ, ತಂಗಾಳಿ ಯಂತೂ ಮತ್ತೆ ಮತ್ತೆ ಆ ಸ್ತನವನ್ನೇ ಮುಟ್ಟುತ್ತ ವಿಟರ ಕೈಯಂತೆ ತೋರುತ್ತದೆಯಂತೆ.

While playing with the balls of flowers, which are similar to their breasts, the young ladies look beautiful because of the slipping of their frill knots from their waists. On touching their breasts, which have shivering nipples due to the strike of the breathing, the wind looks like the hand of a paramour.

**भास्वानस्मानवति न हिमान्मन्दभानुः कृशानोः**
**मन्दज्वालाद्वपुषि विसरन्नास्तमायाति शैत्यम् ॥**
**एवं मत्वा द्विज घनकुचं कामिनीनां शरण्यं**
**दीना यस्यां कुवलयदृशः कामिनः कामयन्ते ॥ १९ ॥**

**भास्वानिति ।** हे द्विज ! ''भास्वान् सूर्यः । हिमात् शैत्यात् । अस्मान् न अवति रक्षति । अव रक्षणे लट् । मन्दभानुः चन्द्रः अपि न अवति । कृशानोः अग्नेः । 'कृशानुः पावकोऽनल' इत्यमरः । मन्दज्वालात्[1] । वपुषि शरीरे । विसरत् आवृतम् । शैत्यं अस्तं

---

१. मन्दज्वालादिति ॥ ज्वलतीति ज्वालः । ज्वलतिकसन्तेभ्यो णः (३-१-१४०) इति णः । मन्दश्चासौ ज्वालश्चेति विग्रहः ॥

न आयाति।'' एवं मत्वा विचार्य। कामिनः। कुवलयवत् दृक् येषां तादृशाः सन्तः। शरण्यं स्वैः शरणं प्राप्तुं योग्यम्। स्वशरीरशैत्यनिवारकमिति यावत्। कामिनीनां स्त्रीणाम्। घनकुचं दीनाःसन्तः यस्यां द्वारकायां कामयन्ते वाञ्छन्ति। तस्यां द्वारकायां कामश्चक्रवर्तीति पूर्वेणान्वयः। कमु कान्तौ लट्। कामिनां कामशैत्यं कवोष्ण-कामिनीकुचस्पर्शसुखत एव परिहृतं भवतीति भावः। अत्र समर्थनीयं कामिनां दैन्यं समर्थ्यते भास्वानित्यादिनेति काव्यलिङ्गम्।

" ಸೂರ್ಯನಾಗಲಿ, ಚಂದ್ರನಾಗಲಿ, ಬೆಂಕಿಯಾಗಲಿ, ದೇಹದೊಳಗೆ ವ್ಯಾಪಿಸಿದ ಈ ಕೊರೆವ ಕೊರೆತವನ್ನು ಪರಿಹರಿಸಲಾರ '' ಎಂದು ತಿಳಿಯುತ್ತ, ಅಲ್ಲಿಯ ಕಾಮುಕರು ಕಾಮಿನಿಯರ ಘನಸ್ತನಗಳಿಗೇ ದೀನರಾಗಿ ಶರಣಾಗುತ್ತಾರಂತೆ. ನೈದಿಲೆಯಂತೆ ಕಣ್ಣರಳಿಸಿ ದಿಟ್ಟಿಸುತ್ತಾ ಬಯಸುತ್ತಾರಂತೆ.

While thinking that neither the sun nor the moon nor the flames of fire can protect them from the chill, attacked on their body, the lustful men with their eyes wide open, wish to surrender only to the hard breasts of lustful women.

**वक्रा भङ्गी न च नयनयोःमञ्जुलो भ्रूविलासः**
**नो वा भूषा कृतरुचिरता न स्मितं भावलोलम्॥**
**भूयश्छाया इव विनयिनः सर्वदा सर्वदेशे**
**द्वारावत्यामनुविदधते सारसाक्षीर्युवानः ॥ २० ॥**

कामिनां दैन्यं वर्णयति। **वक्रेति**। नयनयोः कामिनां इति शेषः। वक्रा भङ्गी रीतिः न च भवति। भ्रूविलासः मञ्जुलः न भवति। भूषा कृता रुचिरता सुन्दरता यस्यास्सा। नैव भवति। स्मितं मन्दहासः। भावलोलं भावेन चञ्चलं न भवति। भावं विनैव हाससञ्चलनमित्यर्थः। भूयः पुनः पुनः। सर्वदा सर्वदेशे छाया इव विनयिनः विनम्राः सन्तः। युवानः द्वारावत्यां सारसवत् अक्षि यासां ताः सुन्दरीः। अनु-विदधते। अनुकुर्वन्ति। अनुसरन्तीति यावत्। अतः द्वारावत्यां विलसति सदा चक्रवर्तीव काम इत्युक्तमिति भावः॥ कामिनीकुचशरणागतिकामाः कामिनः तल्लाभाय तासु अचञ्चलदृष्टिं विधाय, भ्रूविलासं अन्यरीत्या कृत्वा, वेषभूषादिसौन्दर्याभावं अपरि-

गणय्य, कृत्रिमहासं कुर्वन्तः, स्त्रीणां पृष्टतः छाया इव विनम्रा अनुसरन्तीति भावः। एतत्सर्वं दैन्यद्योतकमिति ॥ अत्र उपमा।

ಜಿಂಕೆಗಣ್ಣಿನ ಆ ಯುವತಿಯರನ್ನು ಹಿಂಬಾಲಿಸುವ ಯುವಕರ ನೋಟ ವಕ್ರವಾಗದೆ ನೇರವಾಗಿ ನೆಟ್ಟಿರುತ್ತದೆಯಂತೆ. ಹುಬ್ಬು ಹದಗೆಟ್ಟು ಹರಿದಾಡುವುದಂತೆ. ಉಡುಗೆ-ತೊಡುಗೆ ಅಸ್ತ-ವ್ಯಸ್ತವಾದರೂ ಲೆಕ್ಕಿಸರಂತೆ. ಹಲ್ಲು ಕಿಸಿಯುವುದಂತು ಭಾವಹೀನವಾಗಿ ಕೃತಕವಂತೆ. ಯಾವಾಗಲೂ ಎಲ್ಲ ಕಡೆಗೂ ಅವರಿಗೆ ವಿನಯ ತೋರಿ ವರ್ತಿಸುವ ಆ ಯುವಜನತೆ ಆ ಯುವತಿಯರ ನೆರಳಿನಂತೇ ಅವರಿಗೆ ಹಿಂಬಾಲಕರಾಗೇ ಇರುತ್ತಾರಂತೆ.

At Dwaraka, the sights of young men do not have bends (they stare at women); the playful movement of eyebrows are not graceful; their dress is haphazard; their sights are meaningless; in this peculiar state those young men submissively follow the fawn-eyed women everywhere & always like shadows.

**दर्शं दर्शं मुरहरपुरो मञ्जुलत्वं नितान्तं**
**सर्वत्रापि प्रविश हरिणा संसदं शोभमानम् ॥**
**द्वारे देवा कृतकरपुटा दीर्घकालप्रतीक्षाः**
**लब्धुं वृत्ता विगतनिमिषा दुर्लभं यत्प्रवेशम् ॥ २१ ॥**

एवं द्वारकापुरसौन्दर्यं संवर्ण्य राजसभां प्रवेष्टुं चोदयति। **दर्शं दर्शमिति**। हे विप्र! इति शेषः। मुरहरस्य श्रीकृष्णस्य पुरः पुरस्य। मञ्जुलत्वं सर्वत्रापि नितान्तं दृष्ट्वा। हरिणा शोभमानां संसदं प्रविश। प्रोपसर्गपूर्वकात् विश प्रविशने लोट्। तत्संसदः प्रवेशस्य दौर्लभ्यं वर्णयति। **द्वार इति**। दुर्लभं यस्मिन् संसदि प्रवेशस्तम्। लब्धुं वृत्ताः देवाः। द्वारे सभायाः द्वारे। कृतः करपुटः करसश्लेषः यैस्तादृशाःसन्तः। दीर्घकालं प्रतीक्षा येषां तादृशा सन्तः। विगतनिमिषाः अनिमिषा इति। वृत्ताः सञ्जाताः। तादृशसंसदं प्रविशेति अन्वयः। यथा हि अतिदुर्लभपदार्थलाभमग्नः अन्यत्र दृष्टिं विहाय तत्रैव निरन्तरमीक्षते तथा देवानामवस्थेति भावेन तेषामनिमिषत्वं प्रसिद्धं स्यादिति कवेरुत्प्रेक्षा। अत्र गम्योत्प्रेक्षा।

ಓ ಬ್ರಾಹ್ಮಣ ! ಈ ದ್ವಾರಕೆಯಯ ಸೌಂದರ್ಯವನ್ನು ಎಲ್ಲ ಕಡೆ ನೋಡುತ್ತ, ಶ್ರೀ ಕೃಷ್ಣನಿಂದ ಕಳೆ ಗಟ್ಟಿದ ರಾಜಸಭೆಗೆ ಪ್ರವೇಶ ಮಾಡು. ದೇವತೆಗಳೂ ಕೂಡ ಆ ಸಭೆಯ ದ್ವಾರದಲ್ಲಿಯೇ, ಕೈ ಜೋಡಿಸಿ ನಿಂತು ದುರ್ಲಭವಾದ ಆ ಸಭೆಯ ಪ್ರವೇಶಕ್ಕಾಗಿ, ಬಹುಕಾಲದಿಂದ ಕಾಯುತ್ತಾರಂತೆ. ರೆಪ್ಪೆಯನ್ನು ಅಲುಗಾಡಿಸದೆ ನಿರೀಕ್ಷಿಸುತ್ತ 'ಅನಿಮಿಷ' ಎಂದು ಕರೆಸಿಕೊಳ್ಳುತ್ತಾರಂತೆ !

Oh Brahmin! Seeing everywhere again & again, the beauty of Dwaraka, proceed towards the court, which is beautiful due to the presence of Sri Krishna. To have the entry into this court, which is very difficult to attain, the Devas are waiting at the entrance for longtime with their hands locked & their eyelids without movement. I suppose the Devas are, called "Animishas" because of the latter. (Animishas are those who never winkle their eyes. Though Devas are Animishas by nature, poet supposes the reason for this as above).

**ब्राह्मं तेजो दधतमतुलं कृष्णसक्तान्तरङ्गं**
**दूता दृष्ट्वा कलितविनयास्त्वां सभां वेशयन्ति ॥**
**ब्रह्मन् रत्नस्फटिककिरणाकीर्णगर्भाङ्गणान्तः**
**छायां पश्यन् सपदि सदसो मावतर्तुं यतेथाः ॥ २२ ॥**

भगवत्सभाप्रवेशस्य देवानामपि दुर्लभत्वे कथं मानवस्य मम तल्लाभः सुशक इति विप्रमनोगतां शङ्कां परिहर्तुं वर्णयति ॥ **ब्राह्ममिति** । हे ब्रह्मन् ! अतुलं असदृशम् । ब्राह्मं तेजः वैदिकविप्रस्य कान्तिविशेषम् । दधतं धरन्तम् । कृष्णे सक्तं आसक्तं अन्तरङ्गं यस्य तादृशं च । त्वां दृष्ट्वा । दूताः सन्देशहराः कृष्णभृत्याः । कलितविनयाः प्रदर्शित-विनयाः सन्तः । सभां प्रवेशयन्ति । इतरेषां दुर्लभोऽपि सभाप्रवेशः वैदिकब्राह्मणानां सुलभ इति ब्रह्मण्यदेवेन कृष्णेन व्यवस्था कारिता वर्तत इति भावः । दुर्लभस्थानप्रवेशे लब्धे सति जना वेगेन गन्तुं प्रवर्तन्त इति विप्रोऽपि तथा प्रवृत्तश्चेत्तदा कष्टं भवेदिति प्रतिपादयति । **ब्रह्मन्निति** । हें ब्रह्मन् ब्राह्मण ! रत्नानां स्फटिकानां किरणैः आकीर्णः गर्भः यस्य तादृशस्य अङ्गणस्य प्राङ्गणस्य अन्तः । सदसः सभायाः । छायां प्रति-बिम्बम् । पश्यन् सन् त्वम् । अवतर्तुं मा यतेथाः । प्रयत्नं मा कुरु। यती प्रयत्ने लिङ् ।

सोपानपङ्क्तिसहिता सभोन्नता प्राङ्गणे प्रतिबिम्बे अधस्थितत्वेन भासत इति तत्र अवतर्तुं मनः स्याद्वेगेन प्रवृत्तस्येति भावः । अत्र ब्राह्मं तेजो दधतमिति काव्यलिङ्गम् । एवं प्रतिबिम्बे अवतरणनिषेधेन बिम्बे आरोहणं कर्तव्यं भवतीति निरूपितं भवतीति पर्यायोक्तिः ।

ಓ ಬ್ರಾಹ್ಮಣ ! ನಿನಗೆ ಮಾತ್ರ ಒಳಗೆ ಹೋಗಲು ದೇವತೆಗಳಂತೆ ಕಾಯುವ ಅವಶ್ಯಕತೆಯಿಲ್ಲ. ನಿನ್ನ ಬ್ರಹ್ಮತೇಜಸ್ಸನ್ನು ಹಾಗು ಮನದೊಳಗಿನ ಕೃಷ್ಣ ಭಕ್ತಿಯನ್ನು ಗುರುತಿಸಿದ ಆ ದ್ವಾರಪಾಲಕರು, ಪ್ರಣಾಮಪೂರ್ವಕವಾಗಿ ನಿನ್ನನ್ನು ಸಭೆಗೆ ಪ್ರವೇಶಿಸಲು ಆದರಿಸುತ್ತಾರೆ. ಆದರೆ, ಆ ಕೂಡಲೆ ಸಭೆಗೆ ಹೋಗಲು ಇಳಿಯಬೇಡ. ಏಕೆಂದರೆ ಸಭೆಯೆಂದು ನಿನಗೆ ಕಾಣಿಸುವ ಆ ವಸ್ತು ನಿಜವಾದ ಸಭೆಯಲ್ಲ. ಅದು ರತ್ನ-ಸ್ಫಟಿಕ ಇತ್ಯಾದಿ ಕಿರಣಗಳ ಮಿಶ್ರತೆಯಿಂದ ಅಂಗಳದ ತುಂಬ ಮೂಡಿದ್ದ ಆ ಸಭೆಯ ಪ್ರತಿಬಿಂಬ ಮಾತ್ರ.

Noticing your rich brightness of Brahmin race and on detecting your hearty devotion towards lord Krishna, the attenders will submissively take you to the court. Oh! Brahmin, on seeing the reflection of court in the floor courtyard, which is full of rays emitted by gems and crystals, do not try to get down immediately, because that is not the real court.

**मन्दं मन्दं प्रविश भगवन् सेवकैर्नीयमानः**
**राजास्थानं यदुकुलभुवामासनेषूपविष्टान् ॥**
**यस्मिन् रत्नाचलविनिहितान् विप्र सामन्तपृथ्वी-**
**पालान् हेमक्षितिभृत इवावेक्षसे पार्श्वयोस्त्वम् ॥ २३ ॥**

तर्हि कथं सभाप्रवेशः कार्य इत्याशङ्कायामाह । **मन्दं मन्दमिति** । हे भगवन् ! यदुकुलभुवां राजास्थानं सेवकैः नीयमानः सन् मन्दं मन्दं यथा भवति तथा प्रविश । तथा च सेवकाननुसृत्य गच्छेति भावः । सेवकानां मार्गदर्शनं प्रतीक्षस्वेति यावत् । राजास्थानं वर्णयति । **यस्मिन्निति** । हे विप्र ! त्वम् । यस्मिन् राजास्थाने । पार्श्वयोः आसनेषु उपविष्टान् सामन्तपृथ्वीपालान् सामन्तनरेशान् । रत्नाचलविनिहितान् रत्नगिरीषु निक्षिप्तान् । हेमक्षितिभृत इव सुवर्णशैलान् इव । अवेक्षसे पश्यसि । तादृशमास्थानं

प्रविशेति योजना । तथा च सभायां पार्श्वयोः रत्नालङ्कृतासनेषु सुवर्णवर्णाः हैमकिरीटालङ्कृता समान्तनृपा उपविष्टा स्युरिति भावः ।। अत्र उपमा ।

ಓ ಪೂಜ್ಯನೆ ! ಸೇವಕರು ಕರೆದು ಒಯ್ಯುವ ಕ್ರಮದಲ್ಲಿ ಮೆಲ್ಲ ಮೆಲ್ಲನೆ ಸಾಗುತ್ತ , ಆ ಯಾದವರ ಓಲಗಕ್ಕೆ ಪ್ರವೇಶಿಸುವನಾಗು. ಸಭೆಯಲ್ಲಿ ಎರಡೂ ಕಡೆ ಸಾಮಂತರಾಜರ ಸಾಲಾ ಸಾಲು ತುಂಬಿರುತ್ತದೆ. ಆಸನದಲ್ಲಿ ಕುಳಿತಿರುವ ಅವರೆಲ್ಲ ರತ್ನದ ಬೆಟ್ಟದಲ್ಲಿಟ್ಟ ಬಂಗಾರದ ಶಿಖರಗಳಂತೆ ನಿನಗೆ ತೋರುತ್ತಾರೆ. (ಅಂದರೆ ಅವರು, ರತ್ನಖಚಿತ ಆಸನದಲ್ಲಿ, ಸುವರ್ಣಕಿರೀಟಾದಿ ಅಲಂಕಾರಭೂಷಿತರಾಗಿ ಇರುತ್ತಾರೆಂದು ಭಾವವು.)

Oh! Revered Brahmin, being lead by the attenders, slowly enter the court of Yadavas, where you can see on both sides the feudatory kings, wearing golden crowns, seated on ornamental chairs like the golden summits placed on the mountain of gems.

**तत्र श्रीमान् जगति बलिनामग्रणीः कामपालः**
**हैमे पीठे हिमगिरिरिव भ्राजते रत्नकीर्णे ।।**
**दुर्गैरद्रेः कटकतुलितैः सङ्कुलं यस्य चञ्चत्-**
**सीरप्रान्ते शकलति मृदो हस्तिनापत्तनं स्म ।। २४ ।।**

पार्श्वस्थितान् राज्ञः संवर्ण्य मध्ये उच्चवेदिकास्थितं बलरामं वर्णयति । **तत्रेति** । जगति बलिनां अग्रणीः अग्रेसरः । श्रीमान् कामपालः बलरामः । ''रेवतीरमणो रामः कामपालो हलायुध'' इत्यमरः । तत्र सभायाम् । रत्नकीर्णे । हैमे सुवर्णमये । पीठे । हिमगिरिरिव हिमालय इव । भ्राजते राजते । भ्राजृ दीप्तौ लट् । बलभद्रः शुक्लकेशात्मकश्रीहयविशविशिष्टः शुक्लवर्ण इति भावः । बलराममाहात्म्यं वर्णयति । **दुर्गैरिति** । अद्रेः पर्वतस्य । कटकतुलितैः[१] वर्तुलत्वेन करभूषणेन सदृशैः । दुर्गैः प्राकारैः। सङ्कुलं हस्तिनापत्तनम् । यस्य बलरामस्य । सीरस्य हलायुधस्य प्रान्ते अग्रभागे । ''हलः गोदारणं सीरः'' इत्यमरः । मृदः शकलति[२] स्म शकलवत् आचचार । बलरामः

---

१. कटकतुलितैरिति ।। तुलाशब्दात् तत्करोतीति णिचि कर्मणि क्तः ।

२. शकलति ।। शक्लृ शक्तौ इत्यस्मात् 'शकिशम्योर्नित्' इति उणादिसूत्रेण कलच् । शकलं इव आचरति शकलति । क्विपि सनादित्वात् धातुसञ्ज्ञायां तिबाद्युत्पत्तौ रूपम् ।

हलायुधेन हस्तिनापत्तनं उत्पाटयितुं प्रवृत्त इति कथा। यद्यपीयं कथा, रुक्मिणी-विवाहानन्तरं जाम्बवतीपरिणयानन्तरं श्रीकृष्णजाम्बुवतीपुत्रेण साम्बेन दुर्योधनसुताया लक्षणाया अपहारे कृते, कौरवैः साम्बस्य बन्धने विहिते, तन्मोचनकाले बलरामणेदं माहात्म्यं प्रदर्शितमित्यस्ति। ततश्च अपरिणीताया रुक्मिण्या वाक्ये इयं कथा अनुचितेति भाति। अथापि कवेरियं कथा प्रसक्तेति बोद्धव्यम्। कल्पान्तरीय-कथानुसन्धानेन अधुनातनबलभद्रेऽपीयं कथा रुक्मिण्या योजितेति वा सन्तोष्टव्यम्॥
अत्र उपमा।

ಜಗದ ಮಹಾಬಲಿಗಳ ಅಗ್ರೇಸರನಾದ ಬಲರಾಮನು, ಅಲ್ಲಿ ರತ್ನಖಚಿತ ಸುವರ್ಣ ಆಸನದಲ್ಲಿ ಹಿಮಾಲಯದಂತೆ ವಿರಾಜಿಸುತ್ತಾ ಇರುತ್ತಾನೆ. ದುರ್ಗಮವಾದ ಬಳೆಯಂತೆ ವರ್ತುಲವಾದ ಪರ್ವತದ ಕೋಟೆಗಳಿಂದ ಸುತ್ತೂರೆದ ಹಸ್ತಿನಾಪುರ ಆ ಬಲರಾಮನ ಕಂಪಿಸುವ ನೇಗಿಲಿನ ತುದಿಯಲ್ಲಿ ಮಣ್ಣಿನ ಹೆಂಟೆಯಂತೆ ಆಗಿತ್ತಂತೆ! (ಅಂದರೆ ಈ ಬಲರಾಮನು ನೇಗಿಲಿನಿಂದ ಹಸ್ತಿನಾವತಿಯನ್ನು ಕಿತ್ತು ಎತ್ತಲು ಹೊರಟಿದ್ದನೆಂಬ ಕಥೆ ಅವನ ಬಲಕ್ಕೆ ಸಾಕ್ಷಿ)

There the foremost among the mightiest in the world, Balarama is gleaming, like the mountain Himalaya, on a throne embedded with gems. Once, at the top of his plough (weapon), Hastinavathi the capital of Kourava kingdom protected by banglelike round forts, was looking like a small mass of mud.( once Balarama tried to pull out Hastinavathi through his plough is the story)

**पार्श्वे तस्य स्पृशतु भवतो भासुरो नेत्ररश्मिः**
**सौमं बिम्बं कलयदिव सन्तोषपीयूषमारात्॥**
**रोचिःकान्तं मरकतमयं गुप्तवित्तं श्रुतीनां**
**एकीभूतं कठिणतपसां योगिनामप्यहश्यम्** ॥ २५॥

बलभद्रदर्शनानन्तरं भगवद्दर्शनार्थं चोदयति। **पार्श्वे इति**। हे विप्र! तस्य बलरामस्य। पार्श्वे। भवतः। भासुरः स्फुरन्। नेत्रयो रश्मिः किरणः। ''रश्मिः पुमान् दीधितौ स्यात् किरणप्रग्रहयोरपि'' इति मेदिनी। सौमं सोमसम्बन्धि। बिम्बं इव

मण्डलमिव । आरात् दूरतः अपि । सन्तोषपीयूषं सुखामृतम् । कलयत् उत्पादयत् । रोचिषा प्रकाशेन कान्तं मनोहरम् । मरकतमयं मरकताख्यमणिस्वरूपभूतम् । कठिणं तपः येषां तादृशानां योगिनां अपि अदृश्यं द्रष्टुमशक्यम् । श्रुतीनां वेदानाम् । एकीभूतं मुख्यभूतं एकत्वेन सारतया सम्पादितं वा । गुप्तवित्तं गौप्यधनम् । स्पृशतु । स्पृश स्पर्शने लोट् । अत्रः कृष्ण इति नामानुक्त्वा तत्स्वरूपं वर्णितमिति ध्येयम् । अत्र उपमातिशयोक्तिसङ्करः ।

ಓ ಬ್ರಾಹ್ಮಣ ! ಆ ಬಲರಾಮನ ಪಕ್ಕಕ್ಕೆ, ನಿನ್ನ ಹೊಳೆವ ಕಣ್ಣಿನ ಕಿರಣ ಪ್ರಸಾರವಾಗಲಿ. ದೂರವಿದ್ದರೂ, ಅಮೃತಸುಖ ಸೂಸುವ, ಚಂದ್ರಬಿಂಬದಂತೆ ಆಕರ್ಷವಾದ ಒಂದು ವಸ್ತುವನ್ನು ಕಾಣುವೆ. ಅದು, ಸುಂದರ ತೇಜಃ ಪುಂಜ. ಇಂದ್ರನೀಲ ಮಣಿಯ ಸಂದಣಿ. ವೇದಗಳ ಏಕೈಕ ನಿಗೂಢ ನಿಧಿ ಕಡು ತಪಸುಗೈದರೂ ಯೋಗಿಗಳಿಗೂ ಅದನ್ನು ಕಾಣಲು ಸಾಧ್ಯವಿಲ್ಲವಂತೆ.

Oh Brahmin! Let your glittering rays of eyes, move sideways of Balarama and touch that thing (Krishna) which, gives nectar-like pleasure as a hallow round of moon even from a long distance, attracts due to the brightness like an emerald and which is also the most important hidden treasure of Vedas, and which is difficult to be seen by yogis also even after rigorous penance.

**पूर्तं भूयो भवति भसितेष्वाहुतं वेदशास्त्र-**
**व्याख्यानं स्याद्विपिनरुदितं मेदसश्छेदि कृत्स्नम् ॥**
**स्नानं तीर्थे महति करटिस्नानमाम्नायवेद्ये**
**यस्य प्रीतिर्न यदि भगवन् तस्य कृष्णाख्यधाम्नि ॥ २६ ॥**

**पूर्तमिति** । भगवन् पूज्य! आम्नायवेद्ये कृष्णाख्यधाम्नि तेजसि । यस्य पुरुषस्य । यदि प्रीतिर्न वर्तते । तर्हि तस्य पूर्तं वापीकूपतटाकादिनिर्माणरूपं लोकोपकारकं सत्कर्म । ''पूर्तं खातादिकर्मणि'' इत्यमरः । 'वापीकूपतटाकानि देवतायतनानि च । अन्नप्रदानमारामाः पूर्तमित्यभिधीयते' । भसितेषु भस्मसु । आहुतं प्रदत्तहविः भवति । व्यर्थं भवतीति भावः । वेदशास्त्रव्याख्यानं विपिनरुदितं अरण्यरोदनं भवति ।

'अटव्यरण्यं विपिनं' इत्यमरः । यथा हि अरण्यरोदनं न केनापि श्रूयत इति व्यर्थम् । तथेति भावः । कृत्स्नं कर्मेति शेषः । मेदसः धातुविशेषस्य । छेदि विनाशकारण-मात्रम् । न श्रेयस्साधनमित्यर्थः । महति श्रेष्ठतमे तीर्थे स्नानं करटिनः गजस्य स्नानं भवति । गजः स्नात्वा स्वोपरि धूलिं यथा क्षिपति तथा हरिभक्तिविहीनकृतस्नानं पुनः पापसम्पादनाविरोधीति भावः । तस्मात् कृष्णाख्यधाम्नि प्रीतिरावश्यकीति तत्र तव नेत्ररश्मिः प्रसरतु इति रुक्मिण्याशयः ।। अत्र रूपकम् । अत्राभेदस्य वाच्यत्वा-दार्थत्वाभावान्न निदर्शना ।

ವೇದ ಪ್ರತಿಪಾದ್ಯವಾದ ಶ್ರೀ ಕೃಷ್ಣವೆಂಬ ಆ ತೇಜಃಪುಂಜದಲ್ಲಿ ಪ್ರೀತಿ ಇಲ್ಲವಾದರೆ, ಆ ವ್ಯಕ್ತಿಯ ದಾನ ಧರ್ಮಗಳೆಲ್ಲ ಬೂದಿಯಲ್ಲಿ ನಡೆಸಿದ ಹೋಮವೇ ಸೈ. ವೇದಶಾಸ್ತ್ರ ಚರ್ಚೆಯಲ್ಲ ಮೆದುಳು ಸೀಳುವ ಅಡವಿರೋಧನವು. ಮಾಡುವ ವಿಹಿತ ಕ್ರಿಯೆಗಳೆಲ್ಲ ಕೇವಲ ಕೊಬ್ಬು ಕರಗಿಸುವ ಸಾಧನವು. ಮಹಾತೀರ್ಥಗಳಲ್ಲಿ ಸ್ನಾನಮಾಡುವುದು ಗಜಸ್ನಾನ ಸಮಾನವು. ಆದ್ದರಿಂದ ಶ್ರೀ ಕೃಷ್ಣಭಕ್ತಿ ಅತ್ಯಾವಶ್ಯಕವು.

Oh! Revered Brahmin, if any one who does not have devotion in that bright thing which is praised by all vedas, all the pious acts, for the welfare of society by that person, become waste like performing yoga in ash; his chanting & speech about Vedas become a cry in the forest; all his religious works result only in melting his fat, and his bath in holy rivers become a mere bath of an elephant.

**आम्नायानां सुखनिवसतिः केलिसद्म स्मृतीनां**
**संवर्तार्कः कलुषतमसां दुग्धसिन्धुर्गुणानाम् ।।**
**मन्दारद्रुः पदि निपततां विश्वपद्मस्य नालं**
**कृष्णाभिख्यं जयति भगवन् धाम तस्यां सभायाम्** ।। २७ ।।

**आम्नायानामिति** । हे भगवन् ! आम्नायानां वेदानाम् । सुखनिवसतिः सुखकर-वास स्थानम् । स्मृतीनां केलिसद्म क्रीडासदनम् । ''द्रवकेलिपरीहासाः क्रीडा खेला च नर्म च'' इत्यमरः । कलुषाणि एव तमांसि तेषां कलुषतमसाम् । संवर्तार्कः प्रलयसूर्यः ।

'संवर्तः प्रलयः कल्पः' इत्यमरः । गुणानां गुणरत्नानामित्यर्थः । दुग्धसिन्धुः क्षीरसागरः। पदि निपततां स्वचरणशरणानाम् । मन्दारद्रुः मन्दारवृक्षः कल्पवृक्ष इति यावत् । विश्वमेव पद्मं तस्य नालं धारकदण्डविशेषः । कृष्णाभिख्यं धाम तेजःपुञ्जः । तस्यां सभायां जयति विराजते । जि जये लट् । जयश्चात्रोत्कर्षः । अत्र उल्लेखालङ्काररूपकालङ्कारसङ्करः ।

ಶ್ರೀ ಕೃಷ್ಣನೆಂಬ ಆ ಜ್ಯೋತಿಯು, ವೇದಗಳಿಗೆ ಹಾಯಾದ ಅರಮನೆ. ಸ್ಮೃತಿಗಳಿಗೆ ವಿಹಾರದ ಅಂತಃಪುರ. ಕಾಲುಷ್ಯವೆಂಬ ಕತ್ತಲೆಗೆ ಪ್ರಲಯ ಸೂರ್ಯ. ಗುಣಗಳೆಂಬ ರತ್ನಗಳಿಗೆ ಹಾಲಿನ ಕಡಲು. ಕಾಲಿಗೆರಗಿದ ಜನರಿಗೆ ಅದು ಮಂದಾರ ಕಲ್ಪವೃಕ್ಷ. ಜಗವೆಂಬ ತಾವರೆಗೆ ಆಧಾರವಾದ ದಿಟ್ಟ ದೇಟು. ಓ ಪೂಜ್ಯ ! ಈ ಜ್ಯೋತಿಯೇ ಆ ಸಭೆಯನ್ನು ಬಹಳ ಬೆಳಗಿಸುತ್ತಿರುತ್ತದೆ.

In that court, only that bright thing is seen eminent. That is the only comfortable abode of Vedas; the only playhouse for smrutis; the sun at the time of universal destruction, for the darkness called blemish; the milk ocean for the gems called infinite good qualities; the Mandara tree of heaven for those who prostrate on his feet; & the only supporting stalk for the big lotus called entire universe.

**यस्य प्रीतिर्मयिसहभवा यो नरीनर्ति चित्ते**
**सन्देशोक्तिर्यमधिकुरुते येन मे जीविताशा ॥**
**यस्मै दास्ये रतिसुखमहं नो परः कोपि यस्मात्**
**यस्मिन् विश्वं विलसतितरामीक्षसे तं सभायाम् ॥ २८ ॥**

**यस्येति** । हे विप्र ! मयि यस्य प्रीतिः सहभवा सहजा । यः चित्ते मम चित्ते । नरीनर्ति अतिशयेन नृत्यति । नृती गात्रविक्षेपे यङ्लुकि लट् । मे सन्देशोक्तिः सन्देश-वाक् । यं अधिकुरुते । येन मे जीवितस्य आशा अस्ति । अहं यस्मै रतिसुखं दास्ये । डु दाञ् दाने इति धातोः लृट् । यस्मात् पुरुषात् परः उत्तमः कोऽपि नास्ति । यस्मिन् विश्वं विलसतितराम् । अत्यन्तं विलसति । तं सभायां ईक्षसे पश्यसि । ईक्ष दर्शनाङ्कनयोः लट् । विभक्तिसप्तकसंयोजनेन श्रीकृष्णवर्णनमत्र विशेषः ।

ಓ ಬ್ರಾಹ್ಮಣ ! ಯಾರು ನನ್ನ ಅಂತಃರಂಗದಲ್ಲಿ ಕುಣಿಕುಣಿಯುತ್ತಿರುವನೋ, ನನ್ನ ಒಲವಿನ ಮಾತು ಯಾರನ್ನು ಬಣ್ಣಿಸುತ್ತದೆಯೋ, ಯಾರಿಂದ ನನಗೆ ಬದುಕುವ ಆಸೆ ಉಳಿದಿದೆಯೋ, ಯಾರಿಗಾಗಿ ನನ್ನ ರತಿಸುಖವು ಮೀಸಲಾಗಿದೆಯೋ, ಯಾರಿಗಿಂತ ಮಿಗಿಲಾದ ಒಂದೂ ವಸ್ತು ಇಲ್ಲವೋ, ಯಾರ ಒಲವು ನನಗೆ ಹುಟ್ಟುಗುಣವೋ, ಯಾರಲ್ಲಿ ಜಗವೆಲ್ಲ ಆಶ್ರಯಿಸಿದೆಯೋ, ಅಂಥವನನ್ನು (ಕೃಷ್ಣನನ್ನು) ನೀನು ಆ ಸಭೆಯಲ್ಲಿ ನೋಡುವೆ.

Who always dances in my heart; to whom my message is addressed; by whom I have a wish to live; for whom I will be giving myself; nobody is greater than whom; whose love is my by-birth virtue; where the entire universe shines; you will see that person in that court.

**चन्द्रो भूत्वा त्रिदशविनुतो देवकीगर्भसिन्धौ**
**वज्रं भूत्वा व्रजनिवसतिः पूतनाकायशैले ॥**
**अग्निर्भूत्वा बकमुखसुरारातितूले व्यराजीत्**
**सिंहो भूत्वा प्रखरनखरः कंसदन्तावले यः ॥ २९ ॥**

**चन्द्र इति** । यः । त्रिदशैः देवैः विनुतः सन् स्तुतः सन् । देवकीगर्भसिन्धौ देवक्याः गर्भ एव सिन्धुस्तस्मिन् । चन्द्रः भूत्वा व्यराजीत् । विरराज । वि इत्युपसर्गपूर्वकात् राजृ दीप्तौ इति धातोः लुङ् । यः । व्रजे निवसतिः वासः यस्य तादृशः सन् । पूतनायाः काय एव शैलस्तस्मिन् । वज्रं भूत्वा व्यराजीत् । यः । बकः बकासुरः मुखं प्रारम्भः आद्य इति यावत् येषां ते बकमुखाः । ते च ते सुरारातयश्च सुरशत्रवः दैत्या इति यावत् । बकमुखसुरारातय एव तूलः तस्मिन् । ''पुल्लिङ्गस्तु पिचौ तूलः क्लीबं स्याद्ब्रह्मदारुणि'' इति रुद्रः । अग्निः भूत्वा व्यराजीत् विरराज । कंस एव दन्तावलः गजः तस्मिन् । प्रखरा नखरा यस्य तादृशः । सिंहः भूत्वा यः व्यराजीत् । तादृशः मुरारिः इति उत्तर-श्लोकेनान्वयः । अत्र कृष्णावतारादारभ्य कंसवधपर्यन्तकथा सङ्गृहीतेति बोद्धव्यम् । चन्द्रवंशजत्वेन चन्द्रत्वम् , नीलवर्णत्वेन वज्रत्वम्, अग्नेरपि कृष्णशब्दवाच्यत्वेनाग्नित्वम्, नरसिंहत्वेन चास्य सिंहत्वमिति तद्रूपतापादनसाङ्गत्यं ज्ञायते । अत्र उल्लेखरूपकसङ्करः ।

ಅವನು ದೇವಮಂಡಲ ವಂದಿತನಾಗಿ, ದೇವಕಿಯ ಗರ್ಭಸಿಂಧುವಿನಲ್ಲಿ ಚಂದ್ರನಾಗಿ ಬಂದವನು. ಗೋಕುಲದಲ್ಲಿ ವಸತಿಗೈಯ್ಯುತ್ತ, ಪೂತನೆಯ ಬೆಟ್ಟದಂಥ ಮೈಗೆ ವಜ್ರದಂತಾಗಿದ್ದನು. ಬಕನೇ ಮುಂತಾದ ಅಸುರ ಸಮೂಹವೆಂಬ ಹತ್ತಿಗೆ ಕಾಡ್ಗಿಚ್ಚಿನಂತಾಗಿ ಕಂಗೊಳಿಸಿದವನು. ಮತ್ತೆ ಕಂಸವೆಂಬ ಮದ್ದಾನೆಗಂತೂ ಹರಿತ ಉಗುರುಳ್ಳ ಸಿಂಹದಂತೆಯೇ ಆಗಿದ್ದನು.

Who, being praised by Devas, shone as a moon in the ocean called womb of Devaki; who while residing in Gokula, shone as the weapon Vajra for a mountain called the body of Putana; who shone as a fire for the heap of cotton called Baka and other demons; and who shone as a lion having sharp nails, for an elephant called Kamsa; you will see that person in that court.

**नक्षत्राणामिव समुदये पूर्णिमाशीतरश्मिः**
**हारे रत्नोत्करविलसिते नायको भ्राजमानः ॥**
**ब्रह्मन् तेजःपरिधिविधुतध्वान्तवृन्दो मुरारिः**
**राजन्याद्यैर्विलसतितरां शोभितायां सभायाम् ॥ ३० ॥**

सभायां कृष्णः कथं भासत इति विचारेणाह । **नक्षत्राणामिति** । हे ब्रह्मन् ! तेजः परिधिविधुतध्वान्तवृन्दः तेजसां परिधिः मण्डलम् । ''परिवेषस्तु परिधिरुपसूर्यकमण्डले'' इत्यमरः । तेन विधुतः दूरीकृतः ध्वान्तवृन्दः येन तादृशः । मुरारिः श्रीकृष्णः । राजन्याद्यैः क्षत्रियादिभिः । 'मूर्धाभिषिक्तो राजन्यः बाहुजः क्षत्रियो विराट्' इत्यमरः । शोभितायां सभायाम् । नक्षत्राणां समुदये । पूर्णिमाशीतरश्मिः पूर्णचन्द्रः इव । रत्नानां उत्करेण पुञ्जेन विलसिते । ''पुञ्जराशी तूत्करः कूटमस्त्रियाम्'' इत्यमरः । हारे मालायाम् । भ्राजमानः नायक इव नायकमणिरिव । विलसतितरां अत्यन्तं विलसति । अत्र उपमा ।

ನಕ್ಷತ್ರ ಮಂಡಲದ ನಡುವೆ ಹುಣ್ಣಿಮೆ ಚಂದ್ರನಂತೆ, ರತ್ನ ಖಚಿತ ಸುವರ್ಣಮಾಲೆಯ ನಡುವೆ ನಾಯಕಮಣಿಯಂತೆ, ರಾಜಾಧಿರಾಜರು ಕಂಗೊಳಿಸುವ ಆ ಸಭೆಯ ನಡುವೆ, ಸುತ್ತ ಕತ್ತಲೆಯ ಸೀಳಿ ಹಾಕುವ ತೇಜೋಮಂಡಲದೊಡನೆ, ಶ್ರೀ ಕೃಷ್ಣನೇ ಹೆಚ್ಚಾಗಿ ಮಿಂಚುತ್ತಾನೆ.

Oh Brahmin! Like a full moon in the constellation and like a king beed on a garland of gems, the lord Krishna removing the

entire darkness by brightness, shines highly amidst all kings in that court.

रत्नोत्कीर्णे कलयसि दृशा पादपीठे मुरारेः
पादाम्भोजप्रसृमरकणान् बिम्बितान् पांसुवारान् ॥
अद्यापि स्वे तिलकमलिके यैर्विनिर्माति धाता
पीनोरोजे व्रजमृगदृशश्चन्दनीचक्रिरे यान् ॥ ३१ ॥

इदानीं पादतलादारभ्य मौलिमुकुटपर्यन्तं श्रीकृष्णं वर्णयितुं आरभते । **रत्नोत्कीर्ण इति** । धाता ब्रह्मा । स्वे अलिके ललाटे । ''ललाटमलिकं गोधिः'' इत्यमरः । यैः यादृशपांसुभिः । अद्यापि तिलकं निर्माति रचयति । निर् उपसर्गपूर्वकात् मा माने लट् । व्रजस्य मृगदृशः हरिणाक्ष्यः गोप्यः । यान् पांसून् । स्वे पीनोरोजे पीनस्तने । चन्दनीचक्रिरे । श्रीगन्धत्वेन अलिम्पन् । तादृशान् । रत्नोत्कीर्णे रत्नखचिते । पाद-पीठे । बिम्बितान् प्रतिबिम्बितान् । मुरारेः श्रीकृष्णस्य । पादौ अम्भोज इव तयोः प्रसृमरा कणा येषां तान् । पांसुवारान् धूलिसमूहान् । दृशा कलयसि । पश्यसीत्यर्थः । अत्र रूपकम् ।

ರತ್ನ ಖಚಿತ ಪಾದ ಪೀಠದಲ್ಲಿ ಆ ಕೃಷ್ಣನ ಪಾದಕಮಲದ ಧೂಳೀಕಣಗಳು ಹರಡಿರುವುದು ನಿನಗೆ ಕಾಣುತ್ತದೆ. ಬ್ರಹ್ಮನು ಆ ಪಾದರೇಣುವಿನಿಂದಲೇ ಇಂದಿಗೂ ತನ್ನ ಹಣೆಗೆ ತಿಲಕ ಇಡುತ್ತಾನಂತೆ. ಗೋಕುಲದ ಗೋಪಿಯರೆಲ್ಲ ತಮ್ಮ ಎದೆಗೆಲ್ಲ ಅದನ್ನೇ ಚಂದನವಾಗಿ ಮಾಡಿಕೊಂಡಿದ್ದರಂತೆ.

Oh! Brahmin, in the footstool embedded with gems you will see the image of the spread dust, which look like pollen grains in the lotus feet of Lord Krishna. Even today, Lord Brahma makes TILAKA (beautiful vertical mark) on his forehead out of this dust. The same dust was used by gopikas to smear their breast as sandal paste.

रेखा पादाम्बुजतलगता क्षौमसूत्रायमाणाः
वज्राम्भोजध्वजझषमुखाकारभाजो जयन्ति ॥

**गोप्यो यासां कुचतटपरामर्शनाज्जाततोषाः**
**अद्यापि स्वे घनकुचतटे लाञ्छनान्यालिखन्ति ॥ ३२ ॥**

**रेखा इति** । गोप्यः कुचतटे परामर्शनात् श्रीकृष्णपादतलगतरेखाचिह्नानां सूक्ष्मदृष्ट्या अन्वेषणात् । जाततोषाः सत्यः । यासां रेखाणां लाञ्छनानि । स्वे घनकुचतटे । अद्यापि आलिखन्ति । लिखितरेखाया उपरि पुनःपुनः लिखन्ति । लिख अक्षरविन्यासे लट् । पूर्वं वक्षसि श्रीकृष्णपाददृढसंयोगतः चिह्निताः तत्पादरेखा ध्वजपद्माद्याकाराः इदानीं बहुकालीनतया अस्पष्टा इति तत्परामर्शनपराणां गोपीनां कृष्णविरहार्तानां कृष्णपादरेखाचिह्ने दृष्टे सति तोषोद्रेको भवतीति भावः । अयं च तोषः उत्तरकालेऽप्यावश्यक इति भावेन तोषहेतुभूतचिह्नानां तिरोधानपरिहारार्थं तदुपरि नखादिभिस्तदालेखः गोपीभिरद्यापि क्रियत इति च भावः । एवं रीत्या यासां रेखाणां चिह्नानि आलिखन्ति । तादृशाः । पादौ अम्बुजे इव पादाम्बुजे तयोः तले गताः । क्षौमस्य पट्टवस्त्रस्य सूत्रवत् आचरन्त्यः । तद्वत् सूक्ष्माः स्फुरन्त्य इति चार्थः । वज्रं पविः । अम्भोजं कमलम् । ध्वजः पताका । झषः मीनः । एते मुखानि येषां तेषां आकारान् भजन्त्य इति तादृशाः रेखाः जयन्ति । उत्कृष्टाः सन्तीत्यर्थः। अत्र उपमा । अद्यापि इति अपिना गोपीहर्षः व्यज्यत इति स च श्रीकृष्णरतेः अङ्गमिति प्रेयोऽलङ्कारश्च ।

ಅಡಿದಾವರೆಯ ತಳದಿ ಮೂಡಿರುವ ಗೆರೆಗಳೆಲ್ಲ ರೇಷ್ಮೆಯ ನೂಲಿನಂತೆ ತೆಳುವಾಗಿ ಹೊಳೆಯುತ್ತಿರುತ್ತವೆ. ವಜ್ರ-ಕಮಲ-ಶಂಖ-ಚಂದ್ರ-ಧ್ವಜ-ಮೀನು ಮೊದಲಾದ ಆಕಾರದಲ್ಲಿ ಮೆರೆಯುತ್ತವೆ. ಗೋಪಿಯರು, ಹಿಂದೆ ಮೊಲೆಯಂಗಳದ ತುಂಬ ಮೂಡಿದ್ದ ಆ ಗೆರೆಯ ಗೀರನ್ನು ಗುರುತಿಸಿ ಖುಷಿಗೊಳ್ಳುತ್ತ ಇಂದಿಗೂ ಆ ಗುರುತನ್ನು (ಅಳಿಸಿಹೋಗದಂತೆ) ಮತ್ತೆ ಮತ್ತೆ ತೀಡಿಕೊಳ್ಳುತ್ತಾರಂತೆ.

The lines, on the bottom of the lotus feet of Krishna, shine like silk threads, in the forms of diamond, lotus, digit of moon, flag, fish etc., Even today Gopikas, on detecting the marks of these lines on their bosoms, having got the pleasure, bolden these marks again & again.

पादद्वन्द्वं जयति भगवन् तोषसंविद्वदान्यं
माधुर्यस्यानुभवरुचितः चुम्बितं नाकनद्या ॥
साम्यं लब्धुं स्पृहयदुदके मज्जितं येन धात्रा
पद्मं यस्मात् पतति महता तुल्यतामीहमानः ॥ ३३ ॥

**पादद्वन्द्वमिति** । यस्मात् कारणान् महता समं तुल्यतां साम्यं ईहमानः आकांक्षमाणः पुरुषः पतति इत्यस्ति । तस्मात् कारणात् । येन पादद्वन्द्वेन । साम्यं लब्धुं स्पृहयत् पद्मम् । धात्रा चतुर्मुखेन । उदके मज्जितम् । कमलस्य भगवत्पादसाम्याशापराधत एवोदकनिमज्जनमित्युत्प्रेक्षेति भावः । तादृशम् । माधुर्यस्य अनुभवरुचितः अनुभवाशया । नाकनद्या गङ्गया चुम्बितम् । तोषः आनन्दः संवित् ज्ञानं तयोर्वदान्यं दानशौण्डम् । 'वदान्यो दानशौण्डे स्यात्'' इति मेदिनी । पादद्वन्द्वं श्रीकृष्णचरणद्वन्द्वम् । जयति । पादद्वन्द्वस्य ज्ञानानन्दरूपफलद्वन्द्वप्रदत्वं तु शास्त्रप्रसिद्धम् । अत्र गम्योत्प्रक्षा । साम्यं लब्धुमित्यादौ तु गम्योत्प्रेक्षाव्यतिरेकार्थान्तरन्याससङ्करः । धात्रा कृतस्य पद्मजलपातनस्य अधिकस्पृहायाः कारणतेति गम्योत्प्रेक्षा । पतनफलतः साम्यासम्भवनिष्पत्तेरुपमेयोत्कर्षेण व्यतिरेकः । महता तुल्यतामीहमानः पतति इत्यर्थान्तरन्यासः ।

ಓ ಪೂಜ್ಯ ವಿಪ್ರ ! ಆನಂದ - ಜ್ಞಾನಗಳನ್ನು ನೀಡುವುದೆಂದು ಹೆಸರುವಾಸಿಯಾಗಿ (ಶ್ರೀಕೃಷ್ಣನ ಎರಡು ಪಾದಗಳು) ಮೆರೆಯುತ್ತವೆ. ಆ ಪಾದದ ಸಿಹಿಯನ್ನು ಸವಿಯಲೆಂದು ಗಂಗೆ ಅದಕ್ಕೆ ಮುತ್ತು ಕೊಟ್ಟಿದ್ದಾಳಂತೆ. ಬ್ರಹ್ಮನು ಆ ಪಾದದ ಸಾಮ್ಯತೆ ಗಳಿಸುವ ಆಸೆ ಪಟ್ಟ ತಪ್ಪಿಗೆ ತಾವರೆಯನ್ನು ನೀರಿಗೆ ಹಾಕಿದನಂತೆ. ದೊಡ್ಡವರ ಸಾಮ್ಯತೆಗೆ ಆಸೆಪಟ್ಟರೆ ಪತನವಾಗುವುದು ವಿಧಿಯ ನಿಯಮವಷ್ಟೆ.

Oh respected Brahmin! The feet of Lord Krishna are shining there and are famous for granting two things namely, pleasure & knowledge. The river of heaven, Ganga, having the desire to taste their sweetness, kissed these feet. The lotus flowers are deliberately immersed in water by Brahma because of their sin of being over-ambitious to become equal to those feet. Everyone will fall down if they are over-ambitious to become equal to greater persons.

**पादाम्भोजोल्लसितनखराःहृद्यरूपा मुरारेः**
**कान्त्या नेत्रामृतसुखकराश्चन्द्रबिम्बोपमानाः ॥**
**एणायन्ते चरणपतितानेकनाकीश्वराणां**
**येषु ब्रह्मन् हरिमणिगणैर्मण्ड्यमानाः कीरीटाः ॥ ३४ ॥**

**पादेत्यादि** । हे ब्रह्मन् । हरिमणिगणैः । इन्द्रनीलमणिसमूहैः । मण्ड्यमानाः अलङ्कृताः । चरणपतितानां अनेकनाकीश्वराणां अनेकसुरेश्वराणाम् । किरीटाः । येषु यादृशनखचन्द्रेषु । एणायन्ते[१] एणवत् हरिणवत् आचरन्ति । तादृशाः । हृद्यं रूपं स्वरूपं येषां तादृशाः । कान्त्या नेत्रयोः अमृतवत् सुखकराः । चन्द्रबिम्बं उपमानं येषां तादृशाः । मुरारेः पादौ अम्भोजे इव तयोः उल्लसिता नखराः नखा । जयन्तीति शेषः । ''नमामि निखिलाधीशकिराटाघृष्टपीठवत् ।'' इत्याभियुक्तोक्तेः किरीटसाहित्येन देवा नमन्तीति युक्तमुक्तम् । किरीटगतनीलमणेः केवलं भगवत्पादनखचन्द्रेषु एणायमानत्वमनुक्त्वा किरीटस्य तत्कथनेन नखचन्द्रप्रभायाः पुरतः हैममुकुटकान्तिर्मन्देति भावो ध्वन्यते ॥ अत्र उपमा ।

ಶ್ರೀ ಕೃಷ್ಣ ಪಾದವೆಂಬ ಕನ್ನೈದಿಲೆಯಲ್ಲಿ ಮೆರೆವ ಉಗುರುಗಳೆಲ್ಲ ತನ್ನ ಕಾಂತಿಯಿಂದ ನೋಡುಗರ ಕಣ್ಣಿಗೆ ತಂಪು ನೀಡುತ್ತ, ಚಂದ್ರಬಿಂಬದಂತೆ ತೋರುತ್ತವೆ. ಕಾಲಿಗೆ ಶರಣಾದ ಅನೇಕ ದೇವತೆಗಳ ನೀಲಮಣಿ ಖಚಿತವಾದ ಕಿರೀಟಗಳು, ಆ ಚಂದ್ರನಲ್ಲಿ ಜಿಂಕೆಯ ಗುರುತಿನಂತೆ ತೋರುತ್ತವೆ.

On the lotus feet of Lord Krishna, nails shine like a hallow round of moon because of having beautiful shape and emitting rays, which cool the eyes. While prostrating at these feet, the crowns, of Devas, embedded with sapphires, attain the state of deer-mark on this moon (nails).

**जङ्घायुग्मं दलयुगलसन्मोक्षकुम्भप्रणीतौ**
**दक्षं दण्डद्वयमिव हरेश्चारुवृत्तं विभाति ॥**

---

१. एणायन्त इति ॥ एणशब्दात् क्यङि सनादित्वात् धातुसञ्ज्ञायां ङित्वात् आत्मनेपदि प्रत्यये, अकृत्सार्वधातुकयोरिति दीर्घे एणायन्त इति रूपम् ॥

**ब्रह्मन् सम्पद्विपदभिभवोन्मत्तमातङ्गबन्धे-**
**ष्वालानं यद्भवति विबुधैः सन्ततं प्रार्थ्यमानम् ॥ ३५ ॥**

**जङ्घायुग्ममिति** । ब्रह्मन् ! यत् यादृशं जङ्घायुग्मम् । बिबुधैः देवैः । सन्ततं प्रार्थ्यमानं सत् । सम्पदा ऐश्वर्येण विपदः अभिभवेन च उन्मत्ता ये त एव मातङ्गा गजास्तेषां बन्धेषु बन्धनविषये । आलानं बन्धनस्तम्भः । ''आलानं बन्धनस्तम्भ'' इत्यमरः । भवति । तादृशं चारु सुन्दरम् । वृत्तं वृत्ताकारम् । हरेः जङ्घायुग्मम् । दलयुगलसन्मोक्षकुम्भप्रणीतौ दलयुगेन अनिष्टनिवृत्ति इष्टप्राप्तिरूपदलद्वयेन लसन् मोक्ष एव कुम्भः गजमूर्धाभागः तस्य प्रणीतौ प्रणयने नियन्त्रण इति यावत् । अथ वा मोक्ष एव कुम्भः घटः तस्य निर्माणे । ''कुम्भो घटेभमूर्धांशौ'' इत्यमरः । दण्डद्वयमिव दक्षं सत् समर्थं सत् । विभाति भासते । भा दीप्तौ लट् । दण्डेन गजकुम्भस्थले नियन्त्रणं क्रियत इति दण्डः घटकारणमिति च प्रसिद्धं बोद्ध्यम् । अत्र दण्डद्वयमिवेति उपमा । आलानमिति रूपकम् ।

ಎರಡು ದಳಗಳುಳ್ಳ ಮೋಕ್ಷವೆಂಬ ಗಜಗಂಡಸ್ಥಳವನ್ನು ನಿಯಂತ್ರಿಸುವಲ್ಲಿ ದಕ್ಷವಾದ, ದುಂಡಾಗಿ ಅಂದವಾದ ಶ್ರೀ ಹರಿಯ ಮೊಣಕಾಲು ಎರಡು ದುಂಡುಗೋಲಂತೆ ತೋರುತ್ತವೆ. ಕಷ್ಟವಿಲ್ಲದೆ ಇಷ್ಟವಾದ ಸಕಲ ಐಸಿರಿಯ ಗಳಿಸಿ ಆನೆಯಂತೆ ಸೊಕ್ಕಿರುವ ದೈತ್ಯರನ್ನು ಕಟ್ಟಿ ಬಿಗಿಯಲು, ಆ ಮೊಣಕಾಲುಗಳೇ ಗೂಟವಂತೆ. ಆದ್ದರಿಂದ ದೇವತೆಗಳೆಲ್ಲ ಅದಕ್ಕೇ ಬೇಡುತ್ತಾರಂತೆ.

Oh Brahmin! The pair of beautiful, round shanks of Lord Krishna, looks like two rods which are capable of controlling the temples of elephant called Moksha which is having two portions. (the Moksha is a state where a soul has two things namely, liberation from all miseries and complete happiness). The rods (shanks), acting as posts, are prayed by Devas, because, only these are capable, arresting the elephants called persons who are arrogant due to wealth without any perils.

**सम्यक् साह्यं कलयितुमिवाक्रान्तपीनोरुभारात्**
**आभासेते परिनिपतिताज्जङ्घयोः खेदवत्योः ॥**

**उत्तम्भत्वं द्विज निवहती जानुनी चारुवृत्ते**
**गोपालस्याशनिशतसमे दर्पणस्वच्छभासी ॥ ३६ ॥**

**सम्यगिति** । हेद्विज ! चारुणी च ते वृत्ते च चारुवृत्ते । अशनीनां शतस्य इन्द्रायुधवज्रशतस्य समे काठिण्येन तत्समाने । दर्पणवत् स्वच्छा भाः ययोस्ते । गोपालस्य कृष्णस्य । जानुनी ऊरुसन्धी । ''जानूरूपर्वाष्ठीवदस्त्रियाम् ।'' इत्यमरः । परिनिपतितात् आक्रान्तपीनोरुभारात् आक्रान्तः पीनयो ऊर्वोः भारस्तस्मात् । खेदवत्योः इव तद्भारासहनतः खेदवत्योः इव स्थितयोः जङ्घयोः जान्वधोभागयोः सम्यक् साह्यं सहायम् । तादृशभारधारणे सहायमिति यावत् । कलयितुमिव कर्तुं इव । ते जानुनी उत्तम्भत्वं[1] उन्मुखाकारत्वम् । निवहती सती आभासेते भातः । आङुपसर्गपूर्वकात् भासृ दीप्तौ इति धातोः लट् ॥ अत्र उत्प्रेक्षा ।

ಅಂದವಾಗಿ ದುಂಡಾಗಿರುವ, ನೂರಾರು ವಜ್ರಕ್ಕೆ ಸಾಟಿಯಾದ ಶ್ರೀ ಕೃಷ್ಣನ ಮಂಡಿಗಳು ಕನ್ನಡಿಯಂತೆ ಥಳಥಳವಾಗಿವೆ. ತುಂಬು ತೊಡೆಗಳ ಭಾರಕ್ಕೆ ಬಳಲಿರುವ ಮೊಣಕಾಲಿಗೆ ಸಹಾಯ ಮಾಡುವಂತೆ ಆ ಮಂಡಿಗಳು ಕೊಂಚ ಮುಂಬಂದಂತೆ ತೋರುತ್ತವೆ.

The knees of Lord Krishna shine like a clear mirror, which are round, beautiful and hard like hundreds of diamonds. As if to support the tired shanks in carrying the circumferential load of fatty thighs, the knees are slightly projected to the front.

**ऊरुद्वन्द्वं जयति भगवन् चन्द्रवंशाम्बुधीन्दोः**
**रम्भास्तम्भानुकरणचणं कामतूणायमानम् ॥**
**गोपस्त्रीभिर्यदतुलसुखस्पर्शपीयूषसिन्धौ**
**मज्जं मज्जं चिरमतिशयं विस्मृतः स्वीय आत्मा॥ ३७ ॥**

**ऊरुद्वन्द्वमिति** । हे भगवन् विप्र! गोपस्त्रीभिः गोपिकाभिः। यस्य ऊरुद्वन्द्वस्य ।

---

१. उत्तम्भत्वमिति ॥ उदुपसर्गपूर्वकात् स्तम्भ् धातोः घञि सति निष्पन्नः उत्तम्भशब्दः । 'उदः स्थास्तम्भ्वोः पूर्वस्य' इति पूर्वसवर्णः । उत्तम्भस्य भावः उत्तम्भत्वम् । तस्य भावस्त्वतलौ (५-१-११९)॥

अतुलसुखस्पर्शः असदृशसुखकरः स्पर्शः । स एव पीयूषसिन्धुः अमृतसागरः तस्मिन् । मज्जं मज्जं[1] अत्यन्तं मज्जित्वा । चिरं बहुकालपर्यन्तम् । अतिशयं[2] अत्यन्तम् । स्वीय आत्मा विस्मृतः । तादृशं रम्भास्तम्भयोः कदलीकाण्डयोः अनुकरणेन प्रसिद्धम् । कामस्य मन्मथस्य तूणवत् शराधारवत् आचरत् । 'तूणोपासङ्गतूणीरनिषङ्ग इषुधिर्द्वयोः' इत्यमरः । चन्द्रवंश एव अम्बुधिस्तस्येन्दोः चन्द्रस्य श्रीकृष्णस्य । ऊरुद्वद्वं जयति । अत्र चन्द्रवंशाम्बुधीन्दोरिति रूपकातिशयोक्तिसङ्करः । रम्भास्तम्भानुकरणचणमिति पर्यायोक्तम् । कामतूणायमानमित्युपमा । सुखस्पर्शपीयूषसिन्धाविति रूपकम् ।

ಚಂದ್ರವಂಶದ ಪಾಲ್ಗಡಲಿಗೆ ಚಂದ್ರಮನಾದ ಕೃಷ್ಣನ ತೊಡೆಗಳಂತು, ಬಾಳೆಯ ಕಂದನ್ನು ಹೋಲುತ್ತವೆ. ಕಾಮನ ಬಾಣಕ್ಕೆ ಬತ್ತಳಿಕೆಯಂತಾಗಿವೆ. ಹಿಂದೆ ಆ ತೊಡೆಗಳ ತಿಕ್ಕಾಟದಿಂದ ಉಂಟಾದ ಖುಷಿಯ ಕಡಲಿನಲ್ಲಿ ಮುಳುಗಿದ ಗೋಪಿಕೆಯರು, ಬಹು ಹೊತ್ತು ಮೈ ಮರೆತಿದ್ದರಂತೆ.

The pair of thighs of Lord Krishna, who is a moon to the ocean called Chandravamsha ( the race of moon God, is famous in having similarity to Banana stem, and is like the quiver of cupid. In the past, sinking again & again in the ocean of nectar namely, incomparable pleasant touch of these thighs, the Gopikas had forgotten themselves completely for a long time.

**ब्रह्मन्नब्धेर्जलमिव हरेर्वाडवाग्निप्रभाभिः**
**मिश्रीभूतं ललितजघनं भाति पीताम्बरेण ॥**
**मन्ये मत्वा घनमिति हरिं विद्युतः सन्निषक्ताः**
**तद्रूपाब्धेर्ययुरुपगमाद्विप्र पीताम्बरत्वम्** ॥ ३८ ॥

**ब्रह्मन्निति** । हे ब्रह्मन् ब्राह्मण ! अब्धेः समुद्रस्य । जलं वारि । वाडवाग्निप्रभाभिः मिश्रीभूतमिव । हरेः ललितजघनं कटिपुरोभागः । ''क्लीबे तु जघनं पुरः'' इत्यमरः । पीताम्बरेण मिश्रीभूतं सत् । भाति शोभते । हरिं, घनमिति मेघमिति । मत्वा

१. मज्जं मज्जमिति ॥ टुमस्जो शुद्धौ इति धातुः । तत्र मस्ज् इत्यत्र सकारस्य श्चुत्वेन शकारः। तस्य जश्त्वेन जकारः । मज्ज इति सिद्धम् । तस्मात् आभीक्ष्ण्ये णमुलि, द्वित्वे रूपम् ॥

२. अतिशयमिति ॥ अतीत्युपसर्गपूर्वकात् शीङः 'एरच्' (३-३-५६) इति अच् ।

भ्रमित्वा । सन्निषक्ताः सम्मिलिताः । विद्युतः तडितः । तद्रूपाब्धेः तस्य हरेः रूपमेव स्वरूपमेव अब्धिः तस्य । उपगमात् प्राप्तेः । पीताम्बरत्वं ययुः इति अहं मन्ये । अत्र उपमा । मन्य इत्यादि उत्प्रेक्षा । हरिं घनमिति मत्वेति भ्रान्तिमान् ।

ಓ ಬ್ರಾಹ್ಮಣ ! ಅಂದವಾದ ಕೃಷ್ಣನ ಕಿಬ್ಬೊಟ್ಟೆ ಕಡಲಿನಂತೆ ಗಂಭೀರ. ಕಡಲಿಗೆ ವಾಡವಾಗ್ನಿಯ ಹೊಂಬೆಳಕು ಬೆರತಂತೆ ಅಲ್ಲಿ ಪೀತಾಂಬರವು ಒತ್ತಾಗಿದೆ. ಮುಗಿಲ ಮಿಂಚುಗಳೆಲ್ಲ, ನೀಲಕೃಷ್ಣನನ್ನು ಕಾರ್ಮೋಡವೆಂದು ಭಾವಿಸಿ, ಆ ಕಿಬ್ಬೊಟ್ಟೆಯೆಂಬ ಕಡಲಿಗೆ ಧಾವಿಸಿ, ಪೀತಾಂಬರದ ಆಕಾರದಲ್ಲಿ ಮಾರ್ಪಾಡಾಗಿರಬೇಕೆಂದು ನನಗನ್ನಿಸುತ್ತದೆ.

Oh Brahmin! The fascinating waist of Lord Krishna is glorious and with the covering of Pitambara (golden robe) looks like the water of ocean mixed with the rays of "Vadava fire" (according to Shastas, Vadava fire is always located at the bottom of the sea). I presume that thinking Lord Krishna as a dark cloud, the lightening are rushing to him and merging with the ocean called waist, have attained the state of Pitambara.

**घण्टाश्राव्यस्वनमुखरया विप्र दिक्चक्रवालं**
**हेमोद्दीप्तैर्बहुलमणिभिः कीलितैर्भासयन्त्या ॥**
**मध्यं काञ्च्या विलसति हरेर्भोगिना सिन्धुमध्ये**
**मन्था क्षोणीभृदिव नितरां वेदितो हृद्यदृश्यः ॥ ३९ ॥**

**घण्टेत्यादि** । हे विप्र ! घण्टायाः श्राव्येन श्रवणार्हेण मधुरेणेति यावत् । स्वनेन ध्वनिना । मुखरया मुखरञ्जितया । वदन्ती इव स्थितयेति भावः । कीलितैः हेम्ना सुवर्णेन उद्दीप्तैः उज्वलैः । बहुलमणिभिः । दिक्चक्रवलं दिङ्मण्डलम् । ''चक्रवालं तु मण्डलं'' इत्यमरः । भासयन्त्या प्रकाशयन्त्या । काञ्च्या कटिभूषणेन । ''स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा'' इत्यमरः । हरेः मध्यं देहमध्यभागः । सिन्धुमध्ये समुद्रमध्ये । भोगिना सर्पेण वासुकिना । ''भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः'' इत्यमरः । नितरां अत्यन्तम् । हृद्यदृश्यः हृद्यः इति दर्शनीयः इति च । वेदितः प्रसिद्धः । मन्था मन्थनदण्डभूतः । ''वैशाखमन्थमन्थानमन्थानो मन्थदण्डके'' इत्यमरः।

क्षोणीभृत् इव मन्दरगिरिरिव । विलसति शोभते ।। अत्र उपमा ।

ಭಗವಂತನ ಟೊಂಕದ ಸುತ್ತ ಬಿಗಿದಿದೆ ಚಿನ್ನದ ಒಡ್ಯಾಣ. ಇಂಪಾಗಿ ಮಾತಾಡುವಂತೆ ಅದರ ಅಂಚಿಗೆಲ್ಲ ಘಂಟೆಯ ಕಿಣ, ಕಿಣ. ದಿಸೆ ದಿಸೆಗು ಬೆಳಕು ಹರಿಸುತ್ತ ಚೋತಾಡಿವೆಯಂತೆ ಅದರ ಮುತ್ತು-ರತುನ ಗಣ. ಕ್ಷೀರಸಾಗರದಲ್ಲಿ ರನ್ನ ಹೆಡೆಯ ಬುಸುಗುಟ್ಟುವ ವಾಸುಕಿಯಿಂದ ಸುತ್ತೊರೆದ ಮಂದರದಂತೆ, ಆ ಒಡ್ಯಾಣದೊಡನೆ ಶ್ರೀ ಹರಿಯ ಕಟಿಮಂಡಲವು ಬಲು ಸುಂದರವಾಗಿ ತೋರುವುದಂತೆ.

The waist of Lord Krishna is decorated with the divine waist belt "Kanchi" having hanging gems bound by golden thread and little bells, which are spreading melodious sound everywhere. That beautiful sight is similar to Mandara Mountain, encircled by the snake in the middle of the ocean.

**नाभ्यावर्तो निभृतगहनः पश्यतां वागतीतं**
**नेत्रानन्दं कलयति हरेर्दिव्यगन्धाभिरामः ॥**
**मज्जन् यस्मिन् जठरमविशत्स्वेन संसृज्यमानं**
**विश्वव्रातं विधिरकलयत् चक्षुषा वागतीतम् ॥ ४० ॥**

**नाभ्यावर्त इति ।** यस्मिन् यादृशनाभ्यावर्ते । मज्जन् विधिः ब्रह्मा । जठरं उदरम् । अविशत् प्रविष्टवान् । विश प्रविशने लङ् । तत्र च स्वेन संसृज्यमानं निर्मीयमाणम् । वागतीतं वाचं अतीतम् । वर्णयितुमशक्यमिति यावत् । विश्वव्रातं ब्रह्माण्डसमूहम् । चक्षुषा नेत्रेण । अकलयत् गृहीतवान् । अपश्यदित्यर्थः । तादृशः । निभृतगहनः निभृतः नम्रः । तथा गहनः निगूढः गह्वरश्च । "निभृतविनीतप्रश्रिताः समाः" इत्यमरः । "गहनं वनगुह्ययोः । गह्वरे कलिले चापि" इति हेमः । दिव्यगन्धेन अभिरामः आकर्षकः । हरेः नाभ्यावर्तः नाभिरेव आवर्तः । "स्यादावर्तोऽम्भसां भ्रमः" इत्यमरः । पश्यतां वाचः अतीतं नेत्रानन्दं कलयति करोतीत्यर्थः।। अत्र नाभ्यावर्त इति रूपकम् ।

ಕೃಷ್ಣನ ಆಳವಾದ ಹೊಕ್ಕಳ ಸುಳಿಯು ನೋಡುಗರಿಗೆ ಅವರ್ಣನೀಯ ಆನಂದವನ್ನು ನೀಯುತ್ತದೆ. ಕಮಲದ ಕಂಪಿನಿಂದ ಮನಸೆಳೆಯುತ್ತದೆ. ಆ ನಾಭಿಯೊಳಗೆ ಮುಳುಗಿದ್ದ ಬ್ರಹ್ಮದೇವರು ಶ್ರೀಹರಿಯ

ಹೊಟ್ಟೆಯ ಒಳಗೆ ಬಂದಿದ್ದರಂತೆ. ತನ್ನಿಂದ ಮುಂದೆ ನಿರ್ಮಿಸಬೇಕಾದ, ಲೆಕ್ಕವಿಲ್ಲದಷ್ಟು ಬ್ರಹ್ಮಾಂಡ ಗಳ ರಾಶಿಯನ್ನೇ ಕಂಡು ದಂಗಾದರಂತೆ.

The deep naval cavity of Lord Krishna attracts with divine fragrance and gives indescribable pleasure to viewer's eyes. In the past, Lord Brahma plunging into the naval and entering the stomach of God saw innumerable universes, among which one was to be created by him.

**अम्भःपूरो रुचिरभिसृता मेचकेशस्य नाभिः**
**चार्वावर्तो वलिविलसिता रोमराजिस्तरङ्गः ॥**
**हेमाभूषा मणिविरचिता वाडवाग्निप्रभाली**
**सूक्ष्मं ब्रह्मन् मृदुलमुदरं सिन्धुवन्मेऽवभाति ॥ ४१ ॥**

**अम्भःपूर इति ।** हेब्रह्मन् ! मेचकेशस्य मेचकः कृष्णवर्णः तादृशस्य ईशस्य श्रीकृष्णस्य । ''कृष्णे नीलासितश्यामकालश्यामलमेचकाः'' इत्यमरः । अभिसृता व्याप्ता । रुचिः कान्तिः । अम्भःपूरः जलप्रवाहः । ''पूरो जलप्रवाहे स्यात् व्रण-संशुद्धिखाद्ययोः'' इति मेदिनी । अम्भःपदसान्निध्यात् अत्र प्रवाहमात्रपरः पूरशब्दः । नाभिः चार्वावर्तः चारुः सुन्दरः जलभ्रमः । वलिविलसिता त्रिवळिशोभिता । रोमराजिः तनूरुहपङ्क्तिः । तरङ्गः वीचिः । मणिभिः विरचिता विनिर्मिता । हेमाभूषा[१] हेम्नः समीचीनभूषणम् । वाडवाग्नेः प्रभायाः आली समूहः । सूक्ष्मं मृदुलं उदरं कृष्णजठरम् । मे सिन्धुवत् अवभाति आभासते । अवोपसर्गपूर्वकात् भा दीप्तौ इति धातोः लट् । अत्र उदरं सिन्धुवदवभातीति उत्प्रेक्षा । तत्समर्थनीयं समर्थ्यने अम्भःरूप इत्यादिना सावयवरूपकेनेति काव्यलिङ्गम् ।

ಹರಿಯ ಹರವಿರುವ ನೀಲ ಕಾಂತಿಯೆ ನೀರಿನಂತೆ ಪರಿಪೂರ್ಣವಾಗಿದೆ. ಆಳ ಹೊಕ್ಕಳೇ ಸುಳಿಯಾಗಿದೆ. ತ್ರಿವಳಿಗಳೊಡನೆ ಹೊಳೆವ ರೋಮಸಾಲುಗಳೇ ಅಲೆಗಳಾಗಿವೆ. ಮುತ್ತು-ರತ್ನಗಳ ಬಂಗಾರದ ಒಡವೆಗಳೇ ವಾಡವಾಗ್ನಿಯ ಕಿರಣವಾಗಿವೆ. ಆದ್ದರಿಂದ ಕೃಷ್ಣನ ತೆಳುವಾದ ಮೃದುವಾದ ಉದರವು ಸಾಗರದಂತೆ ತೋರುತ್ತದೆ.

१. हेमाभूषेति ॥ हेम्नः आ समीचीना भूषा इति विग्रहः ।

The dispersed blue rays of dark Krishna is like flooded water. The cavity of naval is like a beautiful whirl. The line of hair with the fold of skins on the belly is like a wave. The golden ornamental belt embedded with gems is like radiance of "Vadava" fire. Thus I presume that the thin & soft stomach of Lord Krishna is like an ocean.

**रम्यं भृङ्गाकुलवनसरैः कौस्तुभत्विट्पलाशैः**
**श्रीवत्सश्रीकिसलयरुचा चारुमुक्ताफलाढ्यम् ॥**
**कामग्रीष्मातपकवलितस्वान्तसीमन्तिनीनां**
**वक्षो ब्रह्मन्नुपवनमिवाभासते मे मुरारेः ॥ ४२ ॥**

**रम्यमिति** । हे ब्रह्मन् ! भृङ्गैः मधुपैः आकुलाः वनसराः वनमालाः तैः । कौस्तुभ-मणेः त्विषः कान्तयः एव पलाशाः पलाशपुष्पाणि तैः । ''स्युः प्रभा रुग्रुचिस्त्विट् भा'' इत्यमरः । श्रीवत्सस्य श्रीवत्सचिह्नस्य श्रीः कान्तिः एव किसलयस्तस्य रुचा कान्त्या । रम्यं सुन्दरम् । चारूणि मुक्ता एव फलानि तैराढ्यम् । मुरारेः कृष्णस्य । वक्षः वक्षस्स्थलम् । काम एव ग्रीष्मातपः तेन कवलितं ग्रस्तं स्वान्तं यासां तासां सीमन्तिनीनां स्त्रीणाम् । ''स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः'' इत्यमरः । उपवनमिव उद्यानवनमिव । मे भाति । अत्र वनसरैरिति श्लेषसंश्लिष्टरूपकम् । उपवनमिवाभासत इत्युत्प्रेक्षा । तत्र रूपकसंश्लेषः ।

ಕೃಷ್ಣನ ಎದೆಯಲ್ಲಿ, ದುಂಬಿಗಳಿಂದ ಸುತ್ತೂರೆದ ವನಮಾಲೆಯೇ ವೃಕ್ಷಸಾಲು. ಕೌಸ್ತುಭದ ಕಾಂತಿಯೇ ಕೆಂಪು ಹೂವು. ಮತ್ತೆ, ಶ್ರೀವತ್ಸದ ಹೊಳಪೇ ಎಳೆ ಕೆಂಚಿಗುರು. ಸುಂದರ ಮುಕ್ತಾಫಲ ಗಳೇ ಫಲಗಳು. ಆದ್ದರಿಂದ ಕಾಮವೆಂಬ ಬೇಸಿಗೆಯ ತಾಪಕ್ಕೆ ತುತ್ತಾಗಿ ಬೆಂದ ಹೃದಯದ ಸುಂದರಿ ಯರಿಗೆಲ್ಲ ಆ ಶ್ರೀ ಕೃಷ್ಣನ ಎದೆಯಂಗಳವೇ ತಂಪುನೀವ ಒಂದು ಸುಂದರ ಕೈತೋಟದಂತೆ ನನಗನ್ನಿ ಸುತ್ತದೆ.

On the chest of Lord Krishna the garland (Vanamala) of twigs, surrounded by bees, is like a line of trees. The rays of Kaustubha gem are like red flowers. The mark of Srivatsa is like a twig. The beautiful pearls are like fruits. Thus I presume that the

chest of Krishna is like a garden for the young ladies who are attacked by the summer heat called lust.

**चक्रं पद्मं सलिलजगदे धारयन्तः सुवृत्ताः**
**चातुर्वर्ण्योद्धरणनिपुणा बाहवस्ते जयन्ति ॥**
**आत्मीयेभ्यो वितरितुमिव श्रीहरेः पूरुषार्थान्**
**बद्धोत्कण्ठा युगपदतुलान्नाप्नुवन् ये चतुस्त्वम् ॥ ४३ ॥**

**चक्रमिति** । ये यादृशा भक्ताः । चतुस्त्वं[1] पुरुषार्थचतुष्टयम् । न आप्नुवन् न अलभन्त । आप्लृ व्याप्तौ लङ् । तेभ्यः । आत्मीयेभ्यः भक्तेभ्य इति भावः । अतुलान् पुरुषार्थान् । युगपत् वितरितुं[2] दातुम् । बद्धा उत्कण्ठा आसक्तिः यैस्ते इव स्थिताः । चातुवर्ण्यस्य उद्धरणे निपुणाः। सुवृत्ताः वृत्ताकाराः । चक्रं पद्मं सलिलजं शङ्खं गदां च धारयन्तः धरन्तः । ते प्रसिद्धाः। श्रीहरेः बाहवः जयन्ति राजन्ते । अत्र उत्प्रेक्षा ।

ಶಂಖ-ಚಕ್ರ-ಗದಾ-ಪದ್ಮಗಳನ್ನು ಧರಿಸಿರುವ ದುಂಡಾದ ಶ್ರೀ ಹರಿಯ ಚತುರ್ಭುಜಗಳು ಚಾತುರ್ವರ್ಣ್ಯವನ್ನು ಎತ್ತಿ ಹಿಡಿವಲ್ಲಿ ಚತುರವಾಗಿವೆ. ಚತುಃ ಪುರುಷಾರ್ಥಗಳನ್ನು ಹೊಂದದಿರುವ ತನ್ನ ಭಕ್ತರಿಗೆ ಆ ನಾಕನ್ನೂ ಒಮ್ಮೆಲೆ ನೀಡಲು ಬದ್ಧಕಂಕಣವಾದಂತೆ ತೋರುತ್ತವೆ.

The four hands of Lord, bearing Chakra, Shankha, Gada and Padma, are capable of maintaining the four Varnas, namely Brahmana, Kshatriya, Vaishya and Shudra. They stand determined to grant, at a time, all the four principal objects called Purusharthas to his own devotees, who have not achieved them yet.

**उद्यद्रेखात्रितयलसितःकौस्तुभस्य प्रभाभिः**
**गाढाश्लिष्टो व्रजयुवतिभिः राजतीवाम्बुजाभः ॥**

---

१. चतुस्त्वमिति ॥ चतुर्णां समूहः चतुस्त्वम् । 'विचित्रा हि तद्धितगतिः' इत्युक्तरीत्या समूहार्थे त्वप्रत्ययः ।

२. वितरितुमिति ॥ वीत्युपसर्गात् तॄ धातोः तुमुन् । 'ऋत इद्धातोः' इति इत्वम् ।

**कण्ठः कान्तो दितिसुतरिपोर्यस्य घोषेण चञ्चद्-**
**बर्हा ब्रह्मन् विदधति मुदा नर्तनं नीलकण्ठाः ॥ ४४ ॥**

**उद्यदित्यादि ।** हे ब्रह्मन् ! यस्य यादृशकण्ठस्य । घोषेण नादेन । नीलकण्ठाः मयूराः । ''मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् । '' इत्यमरः । चञ्चद्बर्हाः सञ्चलत्पिच्छाः सन्तः । ''पिच्छबर्हे नपुंसके'' इत्यमरः । मुदा सन्तोषेण । नर्तनं विधदति कुर्वन्ति । तादृशः। उद्यता व्यक्तेन रेखात्रितयेन लसितः । व्रजयुवतिभिः इव गोपिकाभिः इव । कौस्तुभस्य प्रभाभिः गाढं आश्लिष्टः । अम्बुजस्य आभा इवाभा यस्य सः । कान्तः सुन्दरः । दितिसुतरिपोः दैत्यारेः कृष्णस्य कण्ठः । राजति शोभते । अत्र उपमा । नीलकण्ठनर्तनहेतुघोषस्तु मेघध्वनिरिति कृष्णो मेघसदृश इति पर्यायोक्तम् ।

ಗೋಪಿಕೆಯರು ಅಪ್ಪಿರುವಂತೆ ಕೌಸ್ತುಭ ಪ್ರಭೆಯಿಂದ ಒಪ್ಪಿತವಾದ, ಶಂಖದಂತಿರುವ ಶ್ರೀ ಹರಿಯ ಕಂಠವು, ದೀರ್ಘವಾದ ಮೂರು ಗೆರೆಗಳಿಂದ ಕಂಗೊಳಿಸುತ್ತಿದೆ. ಆ ಕಂಠನಾದಕ್ಕೆ ದಿತಿಯ ಮಕ್ಕಳೆಲ್ಲ ನಡುಗಿದರೆ, ನವಿಲುಗಳೆಲ್ಲ ಗರಿಬಿಚ್ಚಿ ಖುಷಿಯಿಂದ ಕುಣಿಯುತ್ತವಂತೆ.

Oh Brahmin! The neck of the lord is beautiful like a couch, and having three long lines and the rays of Kaustubha beed, appears like embraced by Gopikas. On hearing the sound, originated from the throat, the demons shiver and peacocks dance opening their feathers and enjoy.

**कर्णालम्बामलमणिरुचा कीरचञ्चूविराज-**
**न्नासा कम्रं स्मितविकसितं कर्णविस्तीर्णनेत्रम् ॥**
**वक्त्रं बिम्बाधरविलसितं भाति कंसस्य शत्रोः**
**भृङ्गा यस्मिन् कुवलयधिया कुन्तलन्तीति मन्ये ॥ ४५ ॥**

**कर्णेत्यादि ।** यस्मिन् वक्त्रे। कुवलयधिया कुवलयं उत्पलं इति भ्रमेण । भृङ्गाः मधुपाः। कुन्तलन्ति कुन्तलवत् आचरन्ति इति अहं मन्ये । मनु अवबोधने लट् । तादृशम् । कर्णयोः आलम्बः येषां तादृशा अमला ये मणयः तेषां रुचा कान्त्या कम्र-मित्यनेन योज्यम् । कीरस्य चञ्चूः इव त्रोटिरिव विराजन्त्या नासया नासिकया कम्रं

सुन्दरम्। 'चश्रुश्चश्रूः तथा त्रोटिः' इति हलः। स्मितेन मन्दहासेन विकसितं प्रफुल्लम्। कर्णपर्यन्तं विस्तीर्णे नेत्रे यस्य तत्। बिम्बवत् अधरं तेन विलसितम्। कंसस्य शत्रोः कृष्णस्य। वक्त्रं मुखम्। भाति शोभते। अत्र कुन्तलन्तीति मन्य इत्युत्प्रेक्षा। कुवलय-धियेति भ्रान्तिमान्। अन्यत्र रूपकोपमे।

ಕಿವಿಯಲ್ಲಿ ಜೋತಾಡುವ ಕುಂಡಲ ಮಣಿಯ ಕಿರಣಕ್ಕೆ ಕೆನ್ನೆ ಕೆಂಪಾಗಿದೆ. ಗಿಣಿಮೂತಿಯಂಥ ಆಕರ್ಷಕ ಮೂಗಿನ ಜೊತೆಯಲ್ಲಿ, ಬಿಂಬದಂತಿರುವ ತುಟಿಯ ಮಂದಹಾಸ ಹಿಗ್ಗುತ್ತಿದೆ. ಅರಳಿದ ಕಂಗಳೊಡನೆ ಶ್ರೀ ಕೃಷ್ಣನ ಮುಖಮಂಡಲ ಬಲು ಸುಂದರವಾಗಿದೆ. ಅಲ್ಲಿ ನೈದಿಲೆಯೆಂಬ ಭ್ರಮೆಯಿಂದ ದುಂಬಿಗಳೆಲ್ಲ ಗುಂಪುಗೂಡಿ ಗುಂಗುರ ಮುಂಗುರುಳಾಗಿವೆಯೆಂದು ನನಗನ್ನಿಸುತ್ತದೆ.

The face of Lord is blossomed with smile. It is, glittering with the rays of beeds hung down from the ears and attracting with nose like the beak of a parrot, having the eyes stretched upto ears, and the red lips like the bimba fruit. I presume that on this face, thinking as lotus, the bees have taken the form of curly hair.

**यत्प्रत्युप्तामलमणिरुचा दुर्निरीक्ष्या मुरारे-**
**र्मूर्तिर्भास्वच्छतपरिवृतव्योमवत्तत्किरीटम्॥**
**विद्युद्वृन्दं नभसि लसितान् गाढमाश्लिष्यदब्दान्**
**बाभातीव क्षपिततिमिरं कुन्तलान् विप्र मत्वा॥ ४६॥**

**यदित्यादि।** हे विप्र! मुरारेः कृष्णस्य। मूर्तिः रूपम्। यस्मिन् यादृशकिरीटे। प्रत्युप्तानां खचितानां अमलानां मणीनां रुचा कान्त्या। भास्वतां सूर्याणां। शतेन परिवृतं व्योम इव। दुर्निरीक्ष्या द्रष्टुमशक्या। तत् तादृशम्। मुरारेः किरीटं मुकुटम्। "मुकुटं किरीटं पुंनपुंसकम्" इत्यमरः। कुन्तलान् श्रीहरेः केशान्। नभसि लसितान् अब्दान् मेघान् सतः मत्वा गाढं अश्लिष्यत् क्षपिततिमिरं विद्युद्वृन्दं इव विद्युतां तटितां समूहवत्। बाभाति अत्यन्तं शोभते भा दीप्तौ यङ्लुकि लट्। अत्र उपमा। उत्प्रेक्षाभ्रान्तिमतोः सङ्करः।

ನೂರಾರು ಸೂರ್ಯರು ತುಂಬಿದಾಗ ಆಕಾಶವನ್ನು ಕಣ್ಣಿಟ್ಟು ನೋಡಲಾಗದಂತೆ, ಕಿರೀಟದಲ್ಲಿ ನೆಟ್ಟ ಮಣಿಗಳ ಸ್ವಚ್ಛ ಕಾಂತಿಯಿಂದ ಶ್ರೀ ಕೃಷ್ಣನ ಕಿರೀಟವನ್ನು ದಿಟ್ಟಿಸಿ ನೋಡಲು ಆಗುವುದಿಲ್ಲ. ಮಿಂಚು ಗಳೆಲ್ಲ ಶ್ರೀ ಕೃಷ್ಣನ ಕೂದಲನ್ನೇ ಮಳೆಗಾಲದ ಕಾರ್ಮೋಡವೆಂದು ಅಂದುಕೊಂಡು ಗಟ್ಟಿಯಾಗಿ ಅಪ್ಪಿ ಈ ಹೊಳೆವ ಕಿರೀಟವಾದಂತಿದೆ.

The idol of the Lord is difficult to stare due the rays of beeds stuck to the crown, like the sky with hundreds of suns. It looks as though, thinking the hair to be the clouds and hugging them tightly, the lightening,which destroy darkness, have become the crown.

**मात्स्यं रूपं विलसतितरां दैत्यसन्तानमृत्योः**
**पुच्छक्रीडाक्षुभितविसरद्वार्धिवीचीप्रचारम् ॥**
**ऊर्ध्वोत्सर्पत्सलिलनिवहैर्यश्चकाराभ्रमाब्धिं**
**विष्वग्व्याप्तेरसितवपुषा स्वस्य विप्राब्धिमभ्रम् ॥ ४७ ॥**

एवं एतावता प्रबन्धेन श्रीकृष्णस्यापादमौलिपर्यन्तस्वरूपं संवर्ण्य अधुना तस्य मत्स्याद्यवतारमाहात्म्यं वर्णयति । **मात्स्यं रूपमित्यादिना** । यत् यादृशमात्स्यरूपम् । स्वस्य असितेन वपुषा शरीरेण । उर्ध्वं उत्सर्पद्भिः सलिलां निवहैः समूहैः । अब्धिं समुद्रम् । अभ्रं मेघं सन्तं । चकार । डु कृञ् करणे लिट् । मत्स्यरूपस्य शरीरलीलया समुद्रजलं सर्वं आकाशं प्रति उत्पतितं सत् मेघवत्सञ्जातमिति भावः । ततः स्वस्य असितवपुषा विश्वक् सर्वत्र व्याप्तेः तज्जलस्य व्यापनाद्धेतोः । अभ्रं मेघं अब्धिं सन्तं चकार । ऊर्ध्वं उत्पतितस्य तज्जलस्य व्यापनतः पुनस्सागरत्वमापादितमिति भावः । तत् । पुच्छस्य बालस्य । क्रीडया लीलया । क्षुभितः क्षोभं प्राप्तः । विसरन् व्याप्तः य वार्धिः समुद्रः तस्य वीचीनां प्रचारः यस्मात्तादृशम् । दैत्यसन्तानमृत्योः कृष्णस्य । मात्स्यं रूपम् । विलसतितरां अत्यन्तं शोभते । भगवदवताराणां नित्यत्वात् लट् प्रयोग इति ज्ञेयम् ॥ अत्र तद्गुणपूर्वरूपसङ्करः ।

( ಇಲ್ಲಿಂದ ದಶಾವತಾರವರ್ಣನೆ ಆರಂಭವಾಗಿದೆ. ) ಓ ವಿಪ್ರ ! ಬಾಲವನ್ನು ಅಲುಗಿಸುತ್ತ ಕಡಲ ಕದಡಿ, ಅಲೆಗಳೆಬ್ಬಿಸಿ ಚೆಲ್ಲಿಸಿದ, ಮತ್ಸ್ಯ ರೂಪವು ಈ ಶ್ರೀ ಕೃಷ್ಣನದೆಂದೇ ನೋಡುವೆ. ತನ್ನ ನೀಲ

ದೇಹದ ಲೀಲೆಯಿಂದ, ನೀರನ್ನೆಲ್ಲ ಮೇಲಕ್ಕೆ ಚಿಮ್ಮಿಸುತ್ತ ಕಡಲನ್ನೆಲ್ಲ ಮೋಡದಂತೆ ಮಾಡಿ, ಮತ್ತೆ ಅದನ್ನು ಎಲ್ಲೆಡೆ ಹರಡುವುದರಿಂದ ಆ ಮೋಡವನ್ನು ಕಡಲುಮಾಡಿದ ಮೋಡಿಗಾರ ಈ ಮತ್ಸ್ಯ ರೂಪಿ ಕೃಷ್ಣ

(Now Rukmini describes the ten incarnations of Lord) Oh Brahmin! The play of whose tail agitated the ocean and spread the waves, such incarnation as fish of Lord Krishna, the destroyer of demons' dynasties, is glorious. This incarnation with the help of his dark body, by springing up the water, converted the ocean as clouds and spreading those clouds everywhere made them as an ocean on the sky.

**कौर्मं रूपं विलसति हरेर्यत्सुखस्वापलोलं**
**पृष्ठे भ्राम्यन्मथनगिरिसङ्घातकण्डूयनेन ॥**
**धत्ते शेषं तदनु वसुधां स्वर्गपातालयुक्तां**
**ब्रह्माण्डं वाऽमृतघटमिव क्षोभितक्षीरसिन्धु ॥ ४८ ॥**

इदानीं कूर्मावतारं वर्णयति । **कौर्ममिति** । यत् यद्रूपम् । पृष्ठे पृष्ठस्थले । भ्राम्यतः मथनगिरेः मन्दरस्य सङ्घातः सङ्घर्ष एव कण्डूयनं तेन गात्रविघर्षणेन । सुखस्वापे सुखनिद्रायां लोलं आसक्तम् । ''लोलश्चलसतृष्णयोः'' इत्यमरः । आसीदिति शेषः । तथा । यत् यद्रूपं, क्षोभितः क्षीरस्य सिन्धुः येन तादृशं सत् । शेषं, तदनु स्वर्गपाताल-युक्तां वसुधाम्, ब्रह्माण्डं वा अमृतस्य घटं कलशं इव धत्ते स्वपृष्ठे धरति । डु धाञ् धारणपोषणयोः लट् । तत् । हरेः कौर्मं रूपं विलसति । अत्र उपमा ।

ಈ ಕೃಷ್ಣನದೇ ಮಗದೊಂದು ರೂಪ ಶ್ರೀ ಕೂರ್ಮ. ಮಥನ ಮಾಡುವಾಗ ಬೆನ್ನಮೇಲೆ ಮಂದರ ಗಿರಿಯು ಉಜ್ಜುತ್ತಿದ್ದರೆ ಅದು ಅವನಿಗೆ ತುರಿಸಿದಂತಾಗಿ ಸುಖ ನಿದ್ದೆ ತರಿಸಿತಂತೆ. ಆದರೆ ಆ ರೂಪ-ದಿಂದ ಕ್ಷೀರಸಾಗರವೇ ತತ್ತರಿಸಿತಂತೆ. ಶೇಷನನ್ನು, ಆ ಮೇಲೆ ಸ್ವರ್ಗಪಾತಾಲಸಮೇತ ಭೂಮಂಡಲ ವನ್ನು, ಮತ್ತೆ ಅಮೃತದ ಗಡಿಗೆಯಂತಿರುವ ಬ್ರಹ್ಮಾಂಡವನ್ನು ಆ ಕೂರ್ಮನೇ ಹೊತ್ತಿದ್ದಾನಂತೆ.

The glorious incarnation of Lord Krishna as tortoise, agitating the milk ocean, and was enjoying the sweet sleep due to the scratching on his back by the rubbing of the churning of Mandara

Mountain. He bears the "Shesha" (snake) on his back and further the earth with Pathala (the bottom most world) and Heaven on Shesha and also bears the Brahmanda like a pot of ambrosia (Nectar).

**श्रीवाराहं विलसति वपुर्देवतामौलिसेव्यं**
**नीलाम्भोदावलिरुचि हरेर्यस्य द्रंष्ट्रान्तराले ॥**
**नागो नालं दशहरिदिभाः विप्र पत्राणि मेरुः**
**कोशो भूमिर्जलरुहमिव व्योम रोलम्बवृन्दम् ॥ ४९ ॥**

**श्रीवाराहमिति** । हे विप्र ! यस्य यादृशरूपस्य । द्रंष्ट्रान्तराले द्रंष्ट्रयोः तीक्ष्ण-दन्तयोः अन्तराले मध्यभागे । नागः भूतलाधस्थितः शेषः । नालं पद्मदण्डः । दश हरिदिभाः दिग्गजाः पत्राणि पद्मपत्राणि । मेरुः मेरुपर्वतः । कोशः कुड्मलः । "कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके" इति मेदिनी । भूमिः, जलरुहं कमलम् । व्योम नीलं नभः । रोलम्बवृन्दं इव भृङ्गसमूह इव अभवत् । वराहरूपेण पतिताया भुवः उद्धरणे कृते तद्दंष्ट्रान्तराले स्थिता भूमिः कमलपुष्पवत् भासत इत्यर्थः । तादृशम् । देवतामौलिभिः सेव्यम् । नीलाः ये अम्भोदाः मेघाः तेषां आवलेः पङ्क्तेः रुचि-रिव रुचिः यस्य तत् । हरेः कृष्णस्य । श्रीवाराहं श्रीवराहरूपम् । विलसति शोभते । अत्र मालोपमा ।

ಶ್ರೀ ಕೃಷ್ಣನ ಮತ್ತೊಂದು ರೂಪ ಶ್ರೀ ವರಾಹ. ನೀಲಮೇಘದ ಕಾಂತಿ ಬೀರುವ ಸಕಲ ದೇವತಾಸೇವಿತವಾದ ಆ ರೂಪದ ಕೋರೆ ಹಲ್ಲಿನಲ್ಲಿ, ಶೇಷನೇ ದೇಟು - ದಶದಿಕ್ಕುಗಳೇ - ಎಲೆಗಳು - ಮೇರು ಪರ್ವತವೇ ನಡುವಿನ ಮೊಗ್ಗು - ಭೂಮಿಯೇ ತಾವರೆ ಹೂವು - ನೀಲ ಆಗಸವೆ ಜೇನು ಗುಂಪಿನಂತೆ ಆಗಿತ್ತಂತೆ.

The incarnation of Lord as a wild boar is glorious, having the worship of great Devas and dark rays like clouds. In between his tusks, the snake "Shesha" was like a stalk; the ten parts of sky (north, east, west, south etc.,) were like leaves; the mountain Meru was like a bud; the earth was like a lotus; and the dark sky was like a group of bees.

**गर्भस्रावं कलयदसुरस्त्रीषु सङ्गर्जनेन**
**ब्रह्मन्नेषोऽकलयत हरिर्विग्रहं नारसिंहम् ॥**
**प्रह्लादेनोपमितमणयः सन्ति सन्तः कियन्तः**
**वेत्तुं तत्त्वं कनककशिपोः यो व्यदारीत्पिचण्डम् ॥ ५० ॥**

नरसिंहावतारं वर्णयति । **गर्भस्रावमिति** । हे ब्रह्मन् ! ''प्रह्लादेन उपमिता मणयः मणिभूताः । सन्तः सज्जीवाः । कियन्तः कतिसंख्याकाः । सन्ति ?'' इति इति शेषः । तत्त्वं प्रमेयं वास्तवं वा । वेत्तुं निर्धारयितुम् । यः यादृशावतारी । कनककशिपोः हिरण्य-कशिपोः । पिचण्डं जठरम् । ''पिचण्डकुक्षी जठरोदरं तुन्दं'' इत्यमरः । व्यदारीत् विददार । वि इत्युपसर्गपूर्वकात् दृ विदारण इति धातोः लुङ् । तादृशम् । सङ्गर्जनेन असुरस्त्रीषु गर्भस्रावं कलयत् कारयत् । नारसिंहं नरसिंहसम्बन्धि विग्रहं रूपम् । एषः कृष्णः । अकलयत । स्वीकृतवान् इत्यर्थः । अत्र गम्योत्प्रेक्षा । असुरस्त्रीगर्भस्रावहेतु-गर्जनकरत्वेन असुरनाशकत्वमुक्तं भवतीति पर्यायोक्तिः ।

ಈ ಕೃಷ್ಣನೇ ಹಿಂದೆ ನರಸಿಂಹರೂಪ ಧರಿಸುತ್ತ ಅಸುರ ಹೆಂಗಸರ ಬಸಿರು ಕುಸಿವಂತೆ ಗರ್ಜಿಸಿದ್ದನು. ಪ್ರಹ್ಲಾದನಂತಿರುವ ಸಾತ್ವಿಕ ಚೇತನರೆಂಬ ರತ್ನಗಳು ಇನ್ನೂ ಎಷ್ಟು ಇವೆಯೆಂದು ಹುಡುಕುವುದಕ್ಕೆ ಆ ಹಿರಣ್ಯಕನ ಒಡಲನ್ನೇ ಈ ನರಸಿಂಹ ಬಗೆದನೆಂದು ತೋರುತ್ತದೆ.

The lord had the incarnation as Narasimha, who aborted the wives of demons with his loud roar. He lacerated the stomach of Hiranyakashyapu as if to find the fact that how many diamond-like good souls like Prahlada may be there inside.

**ब्रह्मन् कृष्णः स कपटवटुर्वामनः पूर्वमासीत्**
**स्निग्धप्रेक्ष्यः कुवलयदृशां यस्य नाकिस्रवन्ती ॥**
**संवर्धिष्णोः सपदि चरणात् स्वःसमाक्रान्तिशीलात्**
**आश्चोतन्ती बलिविजयिनो वैजयन्तीयते स्म ॥ ५१ ॥**

वामनावतारं वर्णयति । **ब्रह्मन्निति** । हे ब्रह्मन् ! बलिविजयिनः यस्य यादृश-वामनरूपस्य । संवर्धिष्णोः संवर्धनपरस्य । स्वः समाक्रान्तिशीलात् स्वर्गस्य

समाक्रमणस्य स्वभावः यस्य तस्मात्। चरणात् पादात्। सपदि आश्चोतन्ती[1] पतन्ती। नाकिनां देवानां स्रवन्ती नदी गङ्गा। वैजयन्तीयते स्म ध्वजवदाचरति स्म। तादृशः। कुवलयदृशाम् कमलाक्षीणां स्त्रीणाम्। स्निग्धः प्रेक्ष्यश्च। कपटवटुः वामनः वामनरूपी सन्। स कृष्णः पूर्वं आसीत्। अत्र उपमासमालङ्कारसङ्करः।

ಓ ಬ್ರಾಹ್ಮಣ! ಈ ಶ್ರೀಕೃಷ್ಣನೇ ಹಿಂದೆ ತಾವರೆಗಣ್ಣಿನ ಹೆಣ್ಣುಗಳಿಗೆಲ್ಲ ಮುದ್ದು ಮುದ್ದಾಗಿ ಗೋಚರನಾದ ಕಪಟ ವಟು ವಾಮನನೂ ಆಗಿದ್ದನು. ಆಗ ಸ್ವರ್ಗವ್ಯಾಪಿಯಾಗಿ ತ್ರಿವಿಕ್ರಮನಾಗಿ ಬೆಳೆದ ಅವನ ಪಾದದಿಂದ ಕೆಳಗೆ ಧುಮುಕಿಬಂದ ದೇವನದಿ ಗಂಗೆಯು ಬಲಿಯನ್ನು ಗೆದ್ದ ಆ ವಾಮನನಿಗೆ ವಿಜಯಪಾತಕೆ ಹಾಗೆ ತೋರುತ್ತಿತ್ತು.

Oh Brahmin! In the past Krishna had an incarnation as a small boy (Brahmacharin) by name Vamana who was a deceiver of demons and beautiful to look by the Lilly-eyed girls. The river Ganga, springing from his growing feet, which has pervaded heaven and advanced further, was looking like a flag of victory over Bali (king of demons).

**जातो दीर्घे तपसि वसतां सन्ततौ भार्गवाणां**
**रामो ब्रह्मन् जयति बलिनामीश्वरो यत्कुठारः॥**
**राजन्यानां कुलजलनिधेर्कुम्भयोनीयमानः**
**राजन्यस्त्रीनयननिकरे कोष्णवार्धिं व्यतानीत् ॥५२॥**

परशुरामरूपमाह। **जात इति**। यत्कुठारः यस्य रूपस्य कुठारः परशुः। "द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः" इत्यमरः। राजन्यानां क्षत्रियाणाम्। कुलमेव जलनिधिः तस्य। कुम्भयोनिः अगस्त्यः तद्वदाचरन् सन्। यथा अगस्त्यः समुद्रं समग्रतया पिबन्नशोषयत् तथा परशुरामपरशुः राजन्यकुलं सम्पूर्णतया नामावशेष-मकरोदिति भावेन कुम्भयोनीयमान इत्युक्तम्। ततः राजन्यानां स्त्रीणां नयनानां निकरे समूहे। कोष्णं मन्दोष्णं वार्धिं समुद्रम्। "कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु

---

१. आश्चोतन्तीति॥ यकाररहितोऽयं श्चुतिर् धातुः। आश्चोततीति आश्चोतन्ती। शत्रन्तम्॥

तद्वति'' इत्यमरः । व्यतानीत् अकरोत् । वि इत्युपसर्गपूर्वकात् तनु विस्तारे इति धातोः लुङ् । समग्रवार्धिं पीत्वा अगस्त्यः पुनः तं यथा रूपान्तरेण बहिः निस्सारयामास । तथा कुठारोऽपि राजस्त्रीनयनाश्रुरूपेण राजवंशवार्धिं बहिरानिनायेति भावः । अश्रुजलस्य दुःखोत्थितत्वं स्पष्टयति कोष्णत्वविशेषणेनेति बोध्यम्। तादृशः दीर्घे बहुकालीने तपसि वसतां भार्गवाणां सन्ततौ वंशे जातः बलिनां ईश्वरः रामः परशुरामः जयति । अत्र कुलजलनिधेः कुम्भयोनीयमान इति उपमा । समर्थनीयं कुम्भयोनीयमानत्वं समर्थितं पुनरुष्णवार्धिनिस्सारणकर्तृत्वेनेति काव्यलिङ्गम् । राजन्यकुलजलधिकुम्भयोनीयमानत्वेन रूपेण समस्तदुःक्षत्रनाशकत्वं व्यज्यत इति पर्यायोक्तं च ।

ಓ ವಿಪ್ರ ! ಸುದೀರ್ಘ ತಪಸುಗೈದ ಭಾರ್ಗವ ಸಂತತಿಯಲ್ಲಿ ಜನಿಸಿದ, ಬಲಿಷ್ಠರಲ್ಲಿ ಬಲಿಷ್ಠನಾದ ಪರಶುರಾಮನೂ ಇವನೇ. ಅವನ ಕೊಡಲಿಯು ಅರಸುಕುಲ ಕಡಲನ್ನು ನುಂಗಿ ನೀರುಕುಡಿಯಲು ಅಗಸ್ತ್ಯನಂತಾಗುತ್ತ, ಆ ಅರಸ ಹೆಂಗಸರ ಕಂಗಳಲ್ಲಿ ಬಿಸಿ ಕಡಲ ಕೋಡಿಯನ್ನೇ ಹರಿಸಿ ಹಾಕಿತಂತೆ.

Krishna took another incarnation as Parashurama, who was the mightiest among mightiest, in the lineage of Bhargavas who performed great penance for a long time. His weapon, a small axe, was like sage Agasthya for the ocean of dynasty of kings, made hot ocean to flow from the eyes of women of those kings. ( The sage Agasthya drank and left back whole of ocean, is a popular story in Puranas).

**रक्षोहन्ता दशरथतपःपुण्यपाकायमानः**
**रामो भूत्वा भुवनमखिलं सत्यसन्धः शशास ॥**
**दग्धुश्चापं कुसुमधनुषो विप्र भङ्क्त्वापि योऽसौ**
**सीताप्रेमोत्कचसुमशरे कामचापे वशोऽभूत् ॥ ५३ ॥**

रामावतारं वर्णयति । **रक्षोहन्तेति** । यः यादृशरूपवान् असौ देवः । कुसुमधनुषः मन्मथस्य । यद्यपि मन्मथः कुसुमशरः । तथापि धनुरपि तादृशमिति भावेन कुसुमधनुष

१. रक्षोहन्तेति ॥ तृन्नन्तमेतत् । अथवा 'घटानां निर्मातुः त्रिभुवनविधातुश्च कलह' इत्यादाविव शेषषष्ठ्या समासः ॥

इत्युक्तमिति ज्ञेयम् । दग्धुः दाहकस्य रुद्रस्य । चापं धनुः भंक्त्वा अपि विभज्यापि । सीतायां प्रेम सीताविषयिणी प्रीतिः तदेव उत्कचः प्रफुल्लः सुम एव शरः यस्मिन् तादृशे । कामचापे इन्द्रधनुषि वशः बद्धः अभूत् । इन्द्रधनुर्दर्शने विरहिणः वेदना भवतीति, सीताविरही रामः तथाऽभूदिति भावः । परं तु कामदग्धुः शिवस्य धनुषः भञ्जकस्य रामस्य कामचापवशत्वं आश्चर्यकरमिति भावः । तादृशः दशरथस्य तपसः पुण्यस्य पाकवत् फलवत् आचरन् । रक्षसां रावणादिराक्षसानां हन्ता नाशकः । रामः भूत्वा । (अयं कृष्णः) सत्यसन्धः सन् अखिलं भुवनं शशास । शासु अनुशिष्टौ लिट् । अत्र पुण्यपाकायमान इति उपमा । दग्धुश्चापमित्यादि तु विषमः । कामदाहकचापभञ्जकस्य कामचापवशत्वस्य अननुरूपत्वादिति । अत्रापिना अद्भुतरसः व्यज्यत इति तस्य च कामचापवशत्वरूपविभावव्यक्तसीताविषयकरत्यङ्गत्वात् प्रेयोऽलङ्कारश्च ।

ಈ ಕೃಷ್ಣನೇ ದಶರಥನ ಪುಣ್ಯಪರಿಪಾಕದ ರೂಪವಾಗಿ ರಾಮನಾಗಿ ಜನಿಸಿದ್ದನು. ಸತ್ಯಸಂಧ ಎನಿಸಿ ಜಗವೆಲ್ಲ ಶಾಸನಗೈದನು. ಅವನು, ಹೂಬಾಣ ಬಿಡುವ ಕಾಮನ್ನ ಸುಟ್ಟ ಶಿವನ ಬಿಲ್ಲನ್ನು ಮುರಿದೂ ಸಹ, ಸೀತೆಯ ಮೇಲೆ ಪ್ರೇಮವೆಂಬ ಹೂಬಾಣ ಬಿಡುವ ಕಾಮನಬಿಲ್ಲಿಗೆ ಸೆರೆಯಾಗಿ ಸಿಕ್ಕಿದ್ದನಂತೆ !

The next incarnation,of Lord Krishna was Rama, which was nothing but a result of the luck generated by the hard penance of king Dasharatha. Rama after killing Ravana and other demons, ruled the entire world with probity. Though he broke the bow of Lord Shiva, who burnt the cupid, he was captured by the arrow of Love for Sita that was shot from the bow of cupid.

**बौद्धं रूपं भुवनविदितं देवताकार्यधुर्यं**
**मायाजालावरणपतितानेकविश्वस्य भाति ॥**
**यत्सौन्दर्यं त्रिपुरमहिलामानसे कामबाणो**
**भूत्वा चित्रं त्रिपुरपुरसम्पातनं व्याततान ॥ ५४ ॥**

**बौद्धमिति** । यस्य यादृशबुद्धरूपस्य सौन्दर्यम् । त्रिपुराणां असुराणां या महिला-स्तासां मानसे । कामबाणः भूत्वा । त्रिपुराणां पुरस्य पत्तनस्य सम्पातनरूपं चित्रं

आश्चर्यं व्याततान चकार । बाणप्रहारः एकत्र, पतनं चान्यत्राभूदिति चित्रमित्यस्य भावः । तादृशस्य । माया एव जालं आनायः तस्य आवरणे पतितानि अनेकानि विश्वानि येन तादृशस्य । भगवतः । देवताकार्ये धुर्यं[१] धुरीणम् । 'धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धरा' इत्यमरः । भुवनविदितं लोकप्रसिद्धम् । बौद्धं रूपं भाति । भा दीप्तौ लट् । अत्र कार्यस्य त्रिपुरासुरपतनस्य हेतोः कामबाणस्य च वैयधिकरण्यात् असङ्गतिः ।

ದೇವತೆಗಳ ಕೆಲಸಕ್ಕೆ ಮುಂದಾಳಾಗಿ, ಮಾಯಾಜಾಲದ ಬಲೆಯಲ್ಲಿ ಅನೇಕ ಜಗಗಳನ್ನು ಕೆಡವುತ್ತ, ಜಗಕೆಲ್ಲ ಚಿರಪರಿಚಿತವಾದ ಬುದ್ಧನೂ ಸಹ ಇದೇ ಶ್ರೀ ಕೃಷ್ಣ. ಅವನ ಸೌಂದರ್ಯವು, ತ್ರಿಪುರ ಅಸುರರ ಹೆಂಗಸರ ಮನಸ್ಸಿಗೆ, ಕಾಮಬಾಣವಾಗಿ ಚುಚ್ಚಿದ್ದರೆ, ತ್ರಿಪುರ ಅಸುರರ ಊರೇ ಉರುಳಿ ಬಿದ್ದಿದ್ದು ಆಶ್ಚರ್ಯಕರವಾಗಿತ್ತಂತೆ. (ಬಾಣ ತಾಕಿದ್ದು ಒಂದೆಡೆ ಆದರೆ, ಉರುಳಿಬಿದ್ದದ್ದು ಮತ್ತೊಂದು ಎಂಬುದು ಆಶ್ಚರ್ಯವಷ್ಟೆ ಇದಲ್ಲದೆ, ಶ್ರೀಹರಿಯೇ ಬಾಣವಾಗಿ ತ್ರಿಪುರಾಸುರರನ್ನು ಸಂಹರಿಸಿದ್ದೂ ಇಲ್ಲಿ ಸೂಚ್ಯವಾಗಿದೆ.)

The incarnation of Lord as Buddha, has the main role in the success of Devas' planning. He is famous for entangling number of worlds into the net of illusion. His beauty, by becoming the lust arrow to the minds of Tripurasuras' wives, made their kingdom to collapse. It is really a surprise because, the arrow hit something, something else collapsed.

**कल्की श्रीमान् जयति भगवान् सम्भविष्यन् युगान्ते**
**म्लेच्छानीकप्रहरणचणं यः कृपाणं दधानः ॥**
**म्लेच्छस्त्रीणां नयनविगलद्वारिधारानिपातैः**
**तापं शाम्यन् बहुलमवनेः पोषिता पुण्यवृक्षम् ॥ ५५ ॥**

**कल्कीति** । यः यद्रूपी । म्लेच्छानां अनीकस्य सेनायाः प्रहरणेन संहारेण प्रसिद्धं प्रहरणचणम् । ''वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्'' इत्यमरः । कृपाणं खड्गम् । ''करवालः कृपाणवत्'' इत्यमरः । दधानः धरन् सन् । म्लेच्छस्त्रीणां

१. धुर्यमिति ॥ धुर् शब्दात् 'धुरो यड्ढञौ' (४-४-७७) इति यति 'न भकुर्छुराम्' (८-२-७९) इति सूत्रेण प्राप्तस्य 'हलि च' (८-२-७७) इति दीर्घस्य निषेधः ।

नयनेभ्यः विगलतां वारिणां धाराणां प्रवाहैः । अवनेः भूमेः । बहुलं तापं शाम्यन् शमयन् सन् । पुण्यवृक्षं पुण्यरूपवृक्षं पोषिता कलियुगान्ते पोषयिष्यन् । श्रीमान् कल्की सन् । भगवान् कृष्णः । जयति विराजते ॥ अत्र उल्लासः । म्लेच्छस्त्रीदोषेण नयन-वारिणा अन्यत्र अवनौ तापोपशमरूपगुणाधानादिति । प्रोढोक्तिश्च । पुण्यवृक्षपोषणा-हेतौ तत्वकल्पनादिति ।

ಈ ಕೃಷ್ಣನೇ ಕಲಿಯುಗದ ಕೊನೆಗೆ, ಮ್ಲೇಚ್ಛರ ಸೇನೆಯೆಲ್ಲವನ್ನೂ ಕತ್ತರಿಸುವ ಕತ್ತಿ ಹಿಡಿದು ಕಲ್ಕಿಯೆಂಬ ರೂಪದಲ್ಲಿ ಬರುತ್ತಾನಂತೆ. ಆಗ, ಪರಿತಾಪಗೊಂಡ ಜಗಕೆಲ್ಲ ತಂಪಾದ ನೆರಳು ನೀಡಲು, ಮ್ಲೇಚ್ಛ ಹೆಂಗಸರ ಕಣ್ಣಿನಿಂದ ಹರಿದು ಬರುವ ನೀರಿನ ಧಾರೆಗಳಿಂದ ಪುಣ್ಯವೆಂಬ ಮರವನ್ನು ಈ ಕಲ್ಕಿಯು ಚಿಗುರಿಸಿ ಬೆಳೆಸುವನಂತೆ.

The Lord will take another incarnation as Kalki, at the end of Kaliyuga, who bears the sword that is capable of destroying all "Mlechas". He will grow flowerful trees through the water flown from the eyes of Mlecha women and thereby removes all the heat (violation of Dharma) from the earth.

**आनैषीद्यो निगममवहत् शैलमुर्वीमहार्षीत्**
**दैत्यौ खर्वो बलिनिरसनो क्षत्ररक्षोनिहन्ता ॥**
**गोपीचेतोहरणनिपुणो मोहकस्तामसानां**
**भूयश्छेत्ता यवनशिरसां नैकरूपो मुरारिः ॥ ५६ ॥**

दशावतारसङ्ग्रहं करोति । **आनैषीदिति** । यः निगमं आनैषीत् आनयत् । आङुप-सर्गपूर्वकात् णी प्रापणे इति धातोः लुङ् । मत्स्यः । यः शैलं मन्दरगिरिं अवहत् । वह प्रापणे लङ् । कूर्मः । यः उर्वीं भूमिम् । अवहत् । वराहः । यः दैत्यौ दितिसुतौ हिरण्यकौ । अहार्षीत् संजहार । हृञ् हरणे लुङ् । नरसिंहः । यः खर्वः सन् वामनः सन् । "खर्वो ह्रस्वश्च वामनः" इत्यमरः । बलेः निरसनः निरासकर्ता अभवत् इति शेषः । वामनः । यः क्षत्राणां रक्षसां च हन्ता अभवत् । रामरूपद्वयम् । यः गोपीनां चेतसां हरणे निपुणः अभवत् । कृष्णः। यः तामसानां तमोयोग्यजीवानाम् । मोहकः अभवत् । बुद्धः । यः भूयः पुनःपुनः यवनशिरसां छेत्ता छेदकः । तादृशः मुरारिः श्रीहरिः

नैकरूपः अनेकरूपवान् वर्तते न केवलं दशरूपी अपि तु नारायणादिशतरूपवान् । विश्वादिसहस्ररूपी । अजिताद्यनन्तरूपीति भावः ।

ಈ ಭಗವಂತನು ವೇದಗಳನ್ನು ತಂದನು. ಮಂದರವನ್ನು ಧರಿಸಿದನು. ಭೂಮಿಯನ್ನು ಎತ್ತಿದನು. ದೈತ್ಯರನ್ನು ಕೊಂದನು. ಬಲಿಯನ್ನು ಒತ್ತಿದನು. ದುಷ್ಟ ಕ್ಷತ್ರಿಯರನ್ನು ಹಾಗು ರಾಕ್ಷಸರನ್ನು ಸಂಹರಿಸಿದನು. ಗೋಪಿಯರ ಚಿತ್ತ ಚೌರ್ಯದಲ್ಲಿ ಚತುರನಾದನು. ತಾಮಸರನ್ನು ಮೋಹಿಸಿದನು. ಮತ್ತೆ ಯವನರ ತಲೆಗಳನ್ನೆಲ್ಲ ಚೆಂಡಾಡುವನಂತೆ. ಈ ಶ್ರೀ ಕೃಷ್ಣನಿಗೆ ಹತ್ತಾರು ರೂಪವಂತೆ.

Thus Krishna's Avatharas(Incarnations) are ten in number. In a nutshell, in the first incarnation he brought vedas to form; in the second carried the Mandara Mountain; lifted the earth in the third; in the fourth destroyed Hiranyaka; in the fifth conquered Bali; in the sixth one destroyed Kshatriyas; the seventh was for the destruction of Ravana and other demons; Krishna as the eighth one attracted the minds of Gopikas; in the nineth as Buddha deluded the minds of wicked souls and lastly as Kalki he will behead Yavanas.

**हायग्रीवी तनुरपि हरेर्विश्वविद्यावदाता**
**राराजीति श्रुतिपरिणुता पाद्मचित्ते लसन्ती ॥**
**ब्रह्मन्नालं भवति हृदयं शंसितुं मे वचो वा**
**वेत्ता नाप्याकलयति गुणान् पार्थिवानां कणानाम्** ॥ ५७ ॥

एवं दशावतारविचारं संवर्ण्य अयं कविः स्वोपास्यं हयग्रीवरूपं विशेषतः संस्मरन् रुक्मिणीमुखेन तद्रूपवर्णनं कारयति । **हायग्रीवीति** । श्रुतिभिः परिणुता संस्तुता । पाद्मचित्ते पद्मभवस्य ब्रह्मणः चित्ते । लसन्ती । विश्वाभिः विद्याभिः अवदाता परिशुद्धा । हायग्रीवी हयग्रीवसम्बन्धिनी तनुः अपि राराजीति अत्यन्तं राजते । राजृ दीप्तौ यङ्लुकि लट् । हे ब्रह्मन् हे ब्राह्मण ! मे हृदयं वचः वा शंसितुं तादृशहयग्रीवगुणान् स्तोतुं अलं पर्याप्तं न भवति । पार्थिवानां कणानां वेत्ता अपि गुणान् हयग्रीवगुणान् न आकलयति सम्पूर्णतया न वदति । एतादृशः हयग्रीवावतारः अपि कृष्णस्यैवैति भावः ।। अत्र

मदीयहृदयवचसोः शंसनासामर्थ्यं समर्थनीयं समर्थ्यते पार्थिवकणानां वेत्राप्यज्ञेयत्वेन तद्गुणानामिति काव्यलिङ्गम् ।

ವೇದಪ್ರಸಿದ್ಧವಾದ, ಸಕಲ ವಿದ್ಯೆಗಳ ಪರಿಶುದ್ಧ ಸ್ವರೂಪವಾದ, ಶ್ರೀ ಹಯಗ್ರೀವ ರೂಪವಂತೂ ಬ್ರಹ್ಮ ಹೃದಯದಲ್ಲಿ ಹೊಳೆಯುತ್ತ ಮೆರೆಮೆರೆಯುತ್ತಿದೆ. ಓ ಬ್ರಾಹ್ಮಣ ! ನನ್ನ ಮನಸ್ಸಾಗಲಿ ಮಾತಾಗಲಿ ಅದನ್ನು ಪೂರ್ಣ ಬಣ್ಣಿಸಲು ಸಾಧ್ಯವೇ ಇಲ್ಲ. ನೆಲದ ಕಣ ಕಣ ಎಣಿಸುವ ಬುದ್ಧಿವಂತನಿಗೂ ಸಹ ಆ ಭಗವಂತನ ಗುಣಗಳನ್ನು ಲೆಕ್ಕಹಾಕಲು ಶಕ್ಯವಿಲ್ಲ.

Apart from the above, the Lord has also taken another incarnation named as Hayagreeva, is shining very much, which is looking very bright and pure due to the possession of knowledge and all holy scriptures. He always shines in the heart of Lord Brahma. Oh! Brahmin, to describe him, my heart or words are not capable. Even the person, who may be able to count the atoms contained in the earth, cannot count the virtues of this lord.

**तोषोद्रिक्तो निकटकलिताघ्यसिनाद्योपचारैः**
**बाष्पोद्रेकान्मुररिपुसुखालोकनान्मा च्युतो भूः ॥**
**लक्षैर्वर्षैः कठिणतपसा कर्षिताङ्गैर्नितान्तं**
**चित्ते राजन्नपि यदुपतिश्चक्षुषा नेक्षणीयः ॥ ५८ ॥**

एतावत्पर्यन्तं श्रीकृष्णं साङ्गोपाङ्गं सावतारं संवर्ण्य, अधुना तादृशभगवद्दर्शनकाले ब्राह्मणस्यास्य आवश्यकं विचारं प्रबोधयति । **तोषोद्रिक्त इति** । हे विप्र ! निकटे कृष्णसमीपे कलितैः समर्पितैः । अर्घ्यं अवनेजनम् । आसनं ते आद्ये येषां तादृशैः उपचारैः सत्कारैः । त्वं तोषोद्रिक्तः सन् । बाष्पाणां आनन्दाश्रूणां उद्रेकात् । मुररिपोः कृष्णस्य सुखकरं यत् आलोकनं दर्शनं तस्मात् । च्युतः वञ्चितः । मा भूः । मा भवः । बाष्पं निगृह्णन् कृष्णदर्शनं कुर्विति भावः । एवं प्रबोधने कारणमाह । **लक्षैरिति** । लक्षैः वर्षैः[1] । कठिणेन तपसा व्रतेन । कर्षितानि अङ्गानि येषां तैः । तादृशतपस्विभिरपि ।

१. वर्षैरिति ॥ वर्षयति वर्षति वा वर्षः । 'अज्विधौ भयादीनामुपसङ्ख्यानम्' (३-३-५६) इत्यच् । अथवा पचाद्यच् (३-१-१३४) । वत्सरे वर्षमस्त्रियामित्यमरः ॥

यदुपतिः श्रीकृष्णपरमात्मा । चित्ते हृदये । राजन् अपि कदाचिदेव गोचरः अपि । चक्षुषा प्रत्यक्षेण । ईक्षणीयः द्रष्टुं शक्यः । न हि भवति । तव तु कृष्णः प्रत्यक्षेण दृश्यत इति तद्दर्शनेन वञ्चितो मा भूः इति भावः । अत्र बाष्पोद्रेकस्य गुणस्य हरिदर्शनप्रतिबन्धकत्वेन दोषत्वमिति गम्यः लेशालङ्कारः । दर्शनच्युतिस्तव न युक्तेत्यस्य समर्थनं लक्षैरित्यादिना क्रियते । तत्र च सामान्यविशेषभावयोगादर्थान्तरन्यासः ।

ಓ ಬ್ರಾಹ್ಮಣ ! ಹೀಗೆ ಭಗವದ್ರೂಪಗಳನ್ನು ಚಿಂತಿಸುತ್ತ ಭಕ್ತಿಪರವಶನಾದ ನಿನ್ನನ್ನು, ಶ್ರೀ ಕೃಷ್ಣನು ಹತ್ತಿರಕ್ಕೆ ಕರೆದು, ಅರ್ಘ್ಯ – ಆಸನ ಮುಂತಾದ ಮರ್ಯಾದೆ ಮಾಡಿಯೇ ತೀರುತ್ತಾನೆ. ಆಗ ಆನಂದ ಬಾಷ್ಪ ಉಕ್ಕಿ ಬರುವುದರಿಂದ ಕಣ್ಣು ಮಂಜಾಗಿಸಿಕೊಂಡು ಶ್ರೀ ಕೃಷ್ಣನನ್ನು ಸುಖವಾಗಿ ನೋಡುವ ಸೌಭಾಗ್ಯದಿಂದ ವಂಚಿತನಾಗಬೇಡ. ಲಕ್ಷ ಲಕ್ಷ ವರ್ಷ ಕಡು ತಪಸುಗೈದು ಮೈ ಸವೆಸಿದಾಗಲೂ ಸಹ, ಆ ಭಗವಂತ ಕೆಲವು ಕ್ಷಣ ಮಾತ್ರ ಮನದಲ್ಲಿ ಹೊಳೆಯಬಹುದೇ ಹೊರತು, ಕಣ್ಣಾರೆ ಕಾಣಲು ಎಂದಿಗೂ ಸಿಗುವುದಿಲ್ಲ !!

Oh! Brahmin! Do not ever lose the pleasant sight on the Lord because of the eyes are full of tears, which are caused by the exalted pleasure arisen from the best hospitality that is received by you nearby the Lord. Even if the body is tormented by the severe penance for lakhs of years, the Lord though shines for a moment in the heart, can never be seen through eyes.

**दृष्ट्वा यत्त्वां स्मितशशिरुचोल्लासिपीयूषवाचा**
**योगक्षेमं सविनयमयं पृच्छति ब्रह्मनिष्ठम् ॥**
**दत्त्वा तस्योत्तरमनुगुणं गौरवं स्वं च रक्षन्**
**पित्रोर्वृत्तं मम परिचयं ब्रूहि गीर्भिर्मिताभिः ॥ ५९ ॥**

इदानीं विप्रस्य कर्तव्यमाह । **दृष्ट्वेति** । हे विप्र! त्वाम् । ब्रह्मनिष्ठं वैदिकं सन्तम् । दृष्ट्वा । अयं कृष्णः । स्मितमेव शशेः रुक् प्रभा यस्यां तया । उल्लसयुक्ता पीयूषवत् या वाक् अमृतसदृशवाक् तया । योगसहितः क्षेमः तम् । सविनयं विनयेन सहितं यथा भवति तथा यत् पृच्छति । तस्य तादृशप्रश्नस्य । अनुगुणं अनुरूपम् । उत्तरं दत्वा । स्वं गौरवं तथा मम पित्रोः मातापित्रोश्च गौरवं रक्षन् । मिताभिः गीर्भिः

वचनैः । मम वृत्तं वृत्तान्तं परिचयं च ब्रूहि वद । ब्रूञ् व्यक्तायां वाचि लोट् । यद्यपि पूर्वं मम पित्रा भीष्मकेण कृष्णाय अहं प्रदत्तेति, इदानीं मम पिता शिशुपालाय मां दातुं प्रवृत्त इति यत् तत् तद्गौरवभञ्जकं वर्तते । तथापि तत्र मम पिता न स्वभावात् प्रवृत्तः अपि तु दुष्टेन भ्रात्रा रुक्मिणा मोहादिभिर्वशीकृतः सन् प्रवृत्त इति रीत्या पित्रोः गौरवं रक्षन् मम वृत्तान्तं कथयेत्यर्थः । एतेन रुक्मिण्या उत्तमस्त्रीत्वं द्योत्यते । अत्र स्मितशशिरुचेति रूपकम् । पीयूषवागीत्युपमा ।

ಶ್ರೀ ಕೃಷ್ಣನು, ವೈದಿಕನಾದ ನಿನ್ನನ್ನು ನೋಡುತ್ತ, ಬೆಳದಿಂಗಳಂತೆ ಕಿರುನಗೆ ಬೀರುತ್ತ, ಅಮೃತದಂತೆ ಸವಿಯಾಗಿ ಮಾತಾಡಿಸುತ್ತಾನೆ. ವಿನಯಪೂರ್ವಕವಾಗಿ ಯೋಗಕ್ಷೇಮವನ್ನು ವಿಚಾರಿಸುತ್ತಾನೆ. ಆಗ ಅವನಿಗೆ ಸರಿಯಾದ ರೀತಿಯಲ್ಲಿ ಉತ್ತರ ನೀಡುತ್ತ ನಮ್ಮ ಘನತೆಗೆ ಕುಂದಾಗದಂತೆ ನನ್ನ ತಂದೆ-ತಾಯಿಗಳ ವೃತ್ತಾಂತವನ್ನು ಮತ್ತು ನನ್ನ ಪರಿಚಯವನ್ನು ಹೇಳುವನಾಗು. ಹಿತ-ಮಿತ ಮಾತುಗಳಿಂದ ತಿಳಿಸುವವನಾಗು.

Seeing you as a "Vaidika" Oh! Brahmin, Lord Krishna will ask with modesty, about your well-being, through the nectarful talks and with a smile that is similar to the digit of the moon. After answering him properly, by maintaining yours & my parents' respect, you will tell about the happenings around here along with my identity briefly.

**पत्रं दत्तं वितर भगवन् श्रीहरेः पाणिपद्मे**
**धाष्ट्र्यं स्त्रीणामिदमिति मतिस्तस्य चित्ते न चोदेत् ॥**
**विद्वन् वाक्यैः कलय मधुरैस्त्वं तथा ते वदेऽहं**
**पत्रार्थं यत् किमपि न कदा साधवो गोपयन्ति ॥ ६० ॥**

श्रीकृष्णेन साकं सम्भाषणादि विधाय, मद्वृत्तान्तं संवर्ण्य तदा मद्विषये तदुत्सुकतां निरीक्ष्य पत्रं देयमिति भावेनाह । **पत्रमिति** । हे भगवन् पूज्य विप्र ! मया दत्तं पत्रम् । श्रीहरेः पाणिपद्मे वितर समर्पय । वि इत्युपसर्गपूर्वकात् तॄ प्लवनतरणयोः इति धातोः लोट् । कन्यया मया एवं पत्रप्रेषणं धाष्ट्र्यद्योतकमिति भावः कृष्णस्य मनसि यथा न भवति तथा कर्तुं चोदयति । **धाष्ट्र्यमिति** । इदं पत्रप्रेषणम् । स्त्रीणां धाष्ट्र्यं निर्लज्ज-

चर्या। इति मतिः बुद्धिः। तस्य कृष्णस्य। चित्ते। न चोदेत् न चोदयेदित्यर्थः। चुद सञ्चोदने इत्यस्य लिङ्। चुरादीनां णिचः वैकल्पिकत्वात्। हे विद्वन्! मधुरैः वाक्यैः त्वं तथा धाष्ट्र्यबुद्ध्यनुत्पादो यथा स्यात् तथा कलय सम्भाषस्व। तदर्थं इदानीं अहं ते पत्रार्थं वदे[१] नवनवविषयभासनपुरस्सरं वदामि। वद व्यक्तायां वाचि लट्। यद्यपि वद धातुः परस्मैपदी। तथापि ''अकोविदः कोविदवत् प्रवादान् वदिष्यसे नातिविदां वरिष्ठः'' ''मायामनुष्यस्य वदस्व विद्वन्'' इत्यादि भागवतप्रयोगात् तत्परस्य भागवतवरस्यास्य कवेरयं प्रयोगः युक्त इति ज्ञेयम्। अत एव उत्तरत्र वदस्वेत्युक्तमपि युक्तम्। पत्रग्रथितस्यार्थस्य गौप्यत्वात् कथं तद्वर्णनं युक्तमित्याशङ्कायां विप्रस्य तद्वर्णनमावश्यकमिति समर्थनं करोति। **यत्किमपीति**। साधवः सज्जनाः यत्किमपि यत्किञ्चिदपि कदापि न गोपयन्ति। सज्जनेषु इति शेषः। साधवे गोपयन्तीति पाठे साधव इति शेषः। तथा च सज्जनः सज्जनान्तरसविधे स्वहृद्गतं सर्वं वदतीति न्यायेन पत्रार्थवर्णनं युक्तमिति भावः। तर्हि पत्रप्रेषणं व्यर्थमिति न शंक्यम्। ब्राह्मणेनैव स्वमतिचातुर्येणैवं कथितमिति शङ्का माभूदिति पत्रं च प्रेषितवती रुक्मिणीति ध्येयम्॥ अत्र पाणिपद्म इति परिणामः।

ಓ ಪೂಜ್ಯನೇ! ನಾನು ನೀಡಿದ ಪತ್ರವನ್ನು ಶ್ರೀ ಹರಿಯ ಕರಕಮಲಕ್ಕೆ ಸಲ್ಲಿಸು. ಅವನ ಮನದಲ್ಲಿ ಇದು ಹೆಣ್ಣಿನ ಧಾರ್ಷ್ಟ್ಯತನವೆಂಬ ಭಾವನೆ ಬರದಂತೆ ಮಾಡುವನಾಗು. ಓ ವಿದ್ವಾಂಸನೆ! ಪತ್ರದ ಲ್ಲಿರುವಂತೆ ಮಧುರ ಮಾತುಗಳಿಂದ ಮಾತಾಡುವನಾಗು. ಅದಕ್ಕಾಗಿ ನಾನೀಗ ನಿನಗೆ ಪತ್ರ ದಲ್ಲಿರುವ ವಿಷಯವನ್ನೆಲ್ಲ ಬಿಚ್ಚಿ ಹೇಳುತ್ತೇನೆ. ಸಜ್ಜನರು ಸಜ್ಜನರ ಮುಂದೆ ಎಂದಿಗೂ ಏನನ್ನೂ ಮುಚ್ಚಿಡುವುದಿಲ್ಲ.

Oh Revered Brahmin! while handing over the letter to his lotus-like hands, you talk so sweetly that he should not think this act of mine as an impudence of a woman. Oh! learned Brahmin! Now I will explain to you about the meaning of this love-letter. Good people will never hide anything from other good people.

---

१. वदे इति॥ भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः' (१-१-४७) इति भासने आत्मनेपदित्वम्।

क्रोधावस्था यदि मुररिपोर्मानसे वा कवोष्णे
राज्योल्लासप्रतिभटकृतव्यापृतिक्षोभिते वा ॥
वाच्यं नो वा लिखितमपि मे न प्रदेयं रसज्ञा
पित्तोद्रेके भवति सिकता माधुरीं नादधाति ॥ ६१ ॥

इदानीं पत्रप्रदानसमयं निरूपयितुं तदननुगुणकालं प्रदर्श्य तदा पत्रं न देयमिति प्रबोधयति । **क्रोधावस्थेति** । यदि तत्र मुररिपोः कृष्णस्य क्रोधावस्था स्यात् । तदा । वा अथवा । मुरारिपोः मानसे कवोष्णे सति किञ्चित्तापयुक्ते सति । वा अथवा । राज्यस्य उल्लासाय विस्ताराय प्रतिभटैः शत्रुसैनिकैः कृतया व्यापृत्या व्यापारेण क्षोभिते सञ्जातक्षोभे सति । हे विप्र ! त्वया नो वा वाच्यम् । नैव वक्तव्यम् । मे लिखितं अपि लेखनमपि । ''लिखिताक्षरविन्यासे'' इत्यमरः। न प्रदेयम् । पित्तस्य उद्रेके सति । रसज्ञा रसना । ''रसज्ञा रसना जिह्वा'' इत्यमरः । सिकता वालुकायुक्ता भवति । 'सिकता स्त्री सिकतिले वालुकायां तु भूमनि' इति मेदिनी । सिकतिलो नाम वालुकायुक्तदेशः । माधुरीं माधुर्यम् । न आददाति न गृह्णाति । यथा हि पित्तोद्रेके जिह्वा शर्करामाधुर्यं न गृह्णाति । तथा क्रोधाद्यवस्थायां श्रीकृष्णमनः मद्विषये मत्पत्रे वा उत्साहं न गृह्णातीति भावः । अतः तदा मत्सन्देशः न वाच्यः न वा पत्रं देयमिति भावः।। अत्र पित्तोद्रेक इत्यादेः प्रकृतार्थसामान्यविशेषभावानापन्नत्वात् न साक्षादर्थान्तरन्यासः । परन्तु रसज्ञाया पित्तोद्रेकादिविचारस्याप्रस्तुतत्वात् तत्प्रशंसा । अप्रस्तुतेन स्वसदृशेन प्रस्तुतं कोपोद्रेके अनवधाने वा वर्णितविषयरसास्वादनासम्भवरूपं सामान्यं गम्यत इति गम्यः अर्थान्तर-न्यासालङ्कारः ।

ಒಂದು ವೇಳೆ, ಆ ಸಮಯದಲ್ಲಿ ಭಗವಂತನು ಸಿಟ್ಟಿನಲ್ಲಿದ್ದರೆ, ಅಥವಾ, ರಾಜ್ಯವಿಸ್ತರಿಸಲೆಂದು ಶತ್ರು ಸೈನಿಕರು ಆಕ್ರಮಿಸುವುದರಿಂದ ಶ್ರೀ ಕೃಷ್ಣನ ಮನಸ್ಸು ಕದಡಿ ಕುದಿಯುತ್ತಿದ್ದರೆ, ನೀನು ಈ ಸಂದೇಶ ವನ್ನು ಹೇಳುವುದಾಗಲಿ, ನನ್ನ ಪತ್ರವನ್ನು ಕೊಡುವುದಾಗಲೀ ಮಾಡಬೇಡ. ಪಿತ್ತ ಕೆದರಿದಾಗ ನಾಲಿ ಗೆಯು ಮರಗಟ್ಟಿದಂತಾಗಿ, ಸಿಹಿಯನ್ನು ಸವಿಯಲು ಆಗುವುದಿಲ್ಲವಷ್ಟೆ

If the Lord is in the state of anger or his mind is hot, or agitated due to the efforts of the enemy soldiers to expand kingdom, then do not talk and hand over this letter to him. When the secretion of bile juice is excessive, the tongue will become

senseless like sandy soil and thereby unable to taste the sweetness.

एकान्ते श्रीहरिपदसमालोकनात्तर्पितात्मा
व्याहारस्यानुगुणसमयं प्रेक्षमाणो वदस्व ॥
ब्रह्मन् कार्यान्तरविकलिते मा वद त्वं मुरारौ
कार्यासिद्धेरपि वरतरा कार्यसिद्धिर्विलम्बात् ॥ ६२ ॥

तर्हि कदा पत्रं देयमिति प्रश्नं समाधत्ते । **एकान्त इति** । हे ब्रह्मन् एकान्ते रहः । श्रीहरेः पदयोः समालोकनात् सम्यक् दर्शनात् । तर्पितः सन्तोषितः आत्मा मनः येन तादृशः सन् । व्याहारस्य सम्भाषणस्य । ''व्याहार उक्तिः लपितं'' इत्यमरः । अनुगुणं समयं । वीक्षमाणः पश्यन् सन् । वदस्व वद । रूपसाधुत्वविचारः पूर्वोक्तो ध्येयः । हे ब्रह्मन् ! मुरारौ कृष्णे । अन्यत् कार्यं कार्यान्तरम् तेन विकलिते ऊने सति । अमनस्विनि सतीत्यर्थः । त्वं मा वद । तर्हि व्याहारानुगुणसमयनिरीक्षणेन सन्देशप्रापणं विलम्बितं स्यादिति शङ्कायां वक्ति । **कार्यासिद्धेरिति** । कार्यस्य असिद्धेः अपि अपेक्षया विलम्बात् कार्यसिद्धिः वरतरा अत्युत्तमा इति । शीघ्रं कर्तुं प्रवृत्तौ कार्यहानिश्चेत् तदपेक्षया विलम्बेन कार्यसाफल्यं एव विवेकिभिः श्लाध्यत इति भावः । तस्मात् अनुगुणसमयं निरीक्ष्य सन्देशं प्रतिपादयेति रुक्मिण्या साधु निरूपितमिति । अत्र अर्थान्तरन्यासः ।

ಆದ್ದರಿಂದ, ಏಕಾಂತದಲ್ಲಿ ಮಾತನಾಡಲು ಸರಿಯಾದ ಸಮಯವನ್ನು ನಿರೀಕ್ಷಿಸಿ ಶ್ರೀ ಕೃಷ್ಣನ ಪಾದ ದರ್ಶನದಿಂದ ಮನ ತಣಿಸಿಕೊಂಡು ಮಾತಾಡುವನಾಗು. ಓ ಬ್ರಾಹ್ಮಣ ! ಕೃಷ್ಣನು ಬೇರೆ ಏನಾದರೂ ಕೆಲಸಕ್ಕೆ ಹೊರಡುತ್ತಿದ್ದರೆ, ಆಗ ಅವಸರಿಸಿ ಮಾತಾಡಬೇಡ. ದುಡುಕಿ ಕೆಲಸ ಕೆಡುವುದಕ್ಕಿಂತ ತಡವಾಗಿ ಆದರೂ ಕೆಲಸ ಕೈಗೂಡುವುದೇ ಒಳ್ಳೆಯದಷ್ಟೆ.

Oh! Brahmin! Having pleasure due to the sight of Lord's feet and often waiting for the suitable time to talk, you submit my message. Oh! Brahmin! If the Lord is indulged in any other activity, then do not speak. The success of a job is better late than never.

## इति मध्यमसन्देशः

॥ श्री गुरुराजो विजयते ॥

# अथ उत्तरसन्देशः

**त्वं मे प्रेयानिति निगदनं स्वैरिणीवाग्विलासः**
**दूये कामादिति च कलुषाविष्कृतिर्धार्ष्ट्यरीतिः ॥**
**आगच्छामि स्वयमिति हरेऽनुक्तितोऽप्रीतिशङ्का**
**बाल्यं लज्जासहजलसितं किं तवावेदनीयम् ॥ १ ॥**

आदिमसन्देशे मार्गवर्णनं, मध्यमसन्देशे च द्वारकाया द्वारकेशस्य कृष्णस्य च वर्णनं विधाय, अधुनास्मिन्नुत्तरसन्देशे रुक्मिण्या पत्रे यल्लिखितं तदुल्लेखमारभते कविः । **त्वमिति** । इत आरभ्य ''यत्र नौ संगमः स्यादि''तिचतुःपञ्चाशश्लोकपर्यन्तं रुक्मिणीवाक्यमिति ध्येयम् । पत्रे केन प्रकारेण लेखनस्यारम्भः युक्त इति न जानामीति भावेन रुक्मिणी वर्णयति । **त्वमिति** । हे हरे ! ''त्वं मे प्रेयान्[१] प्रियतमः'' इति निगदनं कथनम् । स्वैरिण्याः कुलटाया वाचः विलासः भवति । अनतिपरिचिते पुरुषे ईदृशवाक्प्रसारः स्वैरिणीस्वभाव इति भावः । ''कामात् दूये परितप्तोऽस्मि'' । दूङ् परितापे लट् । इति निगदनं च । कलुषस्य कामरूपदोषस्य आविष्कृतिः आविष्कार-रूपः भवति । ''स्वयं आगच्छामि हे कृष्ण ! त्वत्समीपमायामि'' इति निगदनम् । धाष्टर्यस्य निर्लज्जस्वभावस्य रीतिः प्रकारश्च भवति । लज्जाविहीना एव एवं वदेयुः । ''स्वयं आगच्छामि हे कृष्ण ! त्वत्समीपमायामि'' इति अनुक्तितः अस्मिन् सन्देशे अकथनात् । अप्रीतिशङ्का ''मद्विषये रुक्मिण्याः प्रीतिर्नास्ति । स्याच्चेत् पत्रे 'स्वयमागच्छामि' इति सा लिख्यात् । न च तथा सा लिलेखे''ति प्रकारेण अप्रीतिशङ्कापि तव भवेत् । हे हरे ! मम इति शेषः । मम बाल्यं कौमार्यम् । ''ऊन-षोडशवर्षस्तु नरो बालो निगद्यत'' इति सुश्रुतोक्तेः । लज्जया सहजं लसितं च वर्तत इति

---

१. प्रेयानिति ॥ अतिशयेन प्रियः प्रेयान् । 'द्विवचनविभज्योपपदे तरबीयसुनौ' (५-३-५७) इति ईयसुन् ।

शेषः । मया तव ते सविधे आवेदनीयं प्रतिपादनीयं किं कीदृशं ? केन प्रकारेण मत्कथनारम्भो युक्त इति न जानामीति भावः । अत्र मया किं तवावेदनीयमित्याक्षेपेण गम्यस्य त्वत्सविधे ममावेदनार्हवस्त्वलाभस्य लब्धस्याप्यावेदने मदसामर्थ्यस्य च समर्थनं त्वं मे इत्यादिना कृतं काव्यलिङ्गम् । तत्र रूपकादिसंश्लेष इति ज्ञेयम् ।

ಓ ಹರಿಯೆ ! "ನೀನೇ ಎನ್ನ ನಲ್ಲ" ಎಂದು ನುಡಿದರೆ, ಅದು ಜಾರೆಯರಾಡುವ ಮಾತಿನ ಮೋಡಿಯೆಂದೆನಿಸುತ್ತದೆ. 'ಕಾಮದಿಂದ ಬಳಲಿದ್ದೇನೆ' ಎಂದರೆ, ಕಾಲುಷ್ಯವನ್ನು ತೋಡಿಕೊಂಡಂತೆ ಆಗುತ್ತದೆ. 'ನಾನೇ ಬರುವೆ' ಎಂದು ಹೇಳಿದರೆ, ನಾಚಿಕೆಗೆಟ್ಟ ರೀತಿಯಾಗುತ್ತದೆ. ಮತ್ತೆ, ಹೇಳದೇ ಇದ್ದರೆ, "ಇವಳಿಗೆ ನನ್ನ ಮೇಲೆ ಪ್ರೀತಿ ಇದೆಯೋ- ಇಲ್ಲವೋ' ಎಂಬ ಶಂಕೆ ನಿನಗೆ ಬರಬಹುದು. ಓ ಕೃಷ್ಣ! ಸ್ತ್ರೀ ಸಹಜ ಲಜ್ಜೆಯೊಡನೆ ಎಳೆಹರೆಯದಲ್ಲಿರುವ ಈ ಹುಡುಗಿ ನಿನಗೆ ಹೇಗೆ ಏನನ್ನು ಹೇಳಿಯಾಳು ?

Now Rukmini's letter begins:

"Oh! Sri Krishna, if I say that you are my lover, it sounds as though the bewitchment speech of a call-girl. If I say that, I am burning with lust it would amount to exposing my unchastity and it becomes an act of imprudence. By not telling that I myself will come, you may doubt my love. I am a girl endowed with adolescence and shyness. So what can I tell you?

**श्रावं श्रावं गुरुजनमुखात्त्वद्गुणानप्रमेयान्**
**त्वय्यासक्तं हृदयममले स्वात्मदे सेवकानाम् ॥**
**त्वत्तश्चेतः कथमपि समाक्रष्टुमीशे न चाहं**
**सूचीं लग्नां दृढतरमयस्कान्ततः कान्त यद्वत्** ॥२॥

**श्रावं श्रावमिति** । गुरुजनस्य मुखात् । अप्रमेयान् साकल्येन प्रमातुमशक्यान् असङ्ख्येयानिति यावत् । तव गुणान् । श्रावं श्रावं[१] अतिशयेन श्रुत्वा । सेवकानां भजताम् । स्वात्मदे स्वात्मप्रदातरि । अमले निर्दोषे । त्वयि । हृदयं ममेति शेषः । आसक्तम् । वर्तत इति शेषः । त्वद्गुणश्रवणतः त्वत्प्राप्तिवाञ्छा मम सञ्जातेति, त्वं च

१. श्रावं श्रावमिति ॥ 'आभीक्ष्ण्ये णमुल् च' (३-४-२२) इति णमुल् । द्वित्वम् ।

भजतां स्वात्मप्रद इति ज्ञात्वा भजन्त्या मम च त्वल्लाभः स्यादिति भावेन सा वाञ्छा प्रवृद्धेति भावः । 'अत एतत् पत्रं लिखामि' इति शेषः । ननु कृष्णासक्तं मनः तदन्यत्राकृष्यते चेत् तदा एतत्पत्रानवसर इति चेत् तत्राह । **त्वत्त इति** । हे कान्त ! यद्वत् दृढतरं लग्नां सूचीम् । अयस्कान्ततः समाक्रष्टुं न भवति । तद्वत् त्वत्तः चेतः समाक्रष्टुं अहं । कथमपि केन प्रकारेणापि । न च ईशे न समर्थास्मि । ईश ऐश्वर्ये लट् । तथा च इदानीं त्वत्प्राप्त्यर्थं पत्रलेखनमनिवार्यमिति भावः । अत्र स्वात्मद इति साभिप्रायं विशेषणं परिकरः । उत्तरत्रोपमा ।

ಓ ಮನೋಹರ! ಗುರು ಹಿರಿಯರ ಮುಖದಿಂದ ನಿನ್ನ ಅಗಣಿತ ಗುಣಗಳನ್ನು ಬಹಳ ಸಲ ಕೇಳಿ, ನಿನ್ನಲ್ಲೇ ಹೃದಯ ನೆಲೆ ನಿಂತಿದೆ. ನೀನು ಭಜಿಸುವರಿಗೆ ನಿನ್ನನ್ನೇ ನೀಡುವೆಯೆಂದೂ ಕೇಳಿದ್ದೇನೆ. ಇದಲ್ಲದೆ, ಈ ಮನಸ್ಸನ್ನು ನಿನ್ನಿಂದ ಬೇರೆ ಕಡೆ ಎಳೆದೊಯ್ಯಲು ನನಗೆ ಸಾಧ್ಯವೇ ಇಲ್ಲ. ಅಯಸ್ಕಾಂತಕ್ಕೆ ಬಲವಾಗಿ ಅಂಟಿರುವ ಸೂಜಿಯಂತೆ ಅದನ್ನು ಎಂದಿಗೂ ನಿನ್ನಿಂದ ಬಿಡಿಸಲು ಶಕ್ಯವಿಲ್ಲ. ಸೂಜಿಗೆ ಅಯಸ್ಕಾಂತದಂತೆ ನನಗೆ ನೀನೇ ಆಕರ್ಷಿಸುವ ಪ್ರಾಣಕಾಂತ.

Oh My Darling! hearing so much about your unimaginable virtues by the great persons, my heart is addicted to you, who are so pure and give yourself to the devotees. Oh! my dear! I am unable to pull my heart from you, like a needle strongly stuck to a magnet.

**गोपीपीनस्तनगिरिमहादुर्गसञ्चारधीरः**
**पाणिः पाणिं कलयति कथं स्पर्शरोमोद्गमं मे ॥**
**अम्भस्तृसः पिबति च पुनः स्वादु नाम्भोऽपि विद्वान्**
**कृष्णाथापि स्फुरति हृदयं तत्र हेतुं न जाने ॥३॥**

व्रजवनितामण्डले विहिताद्भुतरासविहारः श्रीकृष्णः कथं खलु रुक्मिणीपाणिग्रहणातुर इहायायात् । अत्यन्तसुन्दरस्त्रीमण्डललोलस्य दूरस्थैकमात्रस्त्रीपरिग्रहः नावश्यकः इति कृष्णः रुक्मिणीपरिग्रहं न कुर्यादेव । तस्मात् रुक्मिण्या पत्रप्रेषणादिकं व्यर्थमित्याशङ्कायामर्धाङ्गीकारेण रुक्मिण्येव समाधत्ते । **गोपीत्यादिना** । हे कृष्ण ! गोपीनां पीनाः पुष्टाः । स्तनाः कुचा एव गिरयः शिखरिणः । तेषां महादुर्गेषु अत्यन्त-

दुर्गमप्रदेशेषु। सञ्चारे धीरः चतुरः। पाणिः तवेति शेषः। तव हस्तः। मे मम पाणिं कथं कलयति गृह्णाति ? स्पर्शेण रोमोद्गमं रोमाञ्चं मे कथं कलयति ? तादृशगोपीस्तन-मध्यविहारपरः तव पाणिः मम पाणिं गृह्णातीति विचारः न सम्भावित इति भावः। कुत इत्यत आह। **अम्भस्तृप्त इति**। अम्भसा जलेन तृप्तः। अम्भः पीत्वा सन्तृप्तः पुरुषः इत्यर्थः। विद्वान् अपि ज्ञानी अपि। 'इदं अमृतं' इति ज्ञात्वापि। स्वादु अपि अम्भः पुनः न च पिबति। पा पाने लट्। यथा हि लोके जलं पीत्वा गततृष्णः पुरुषः तृष्णा-भावे अमृतलाभेऽपि इदममृतमिति ज्ञातेऽपि तत्पाने न प्रवर्तते एवं गोपीमण्डले कृतविहारत्वेन कामिनीतृष्णारहितत्वेन कृष्णस्य राजकन्यापि अहं नावश्यकीति भावः। तर्हि पत्रप्रेषणादिकं व्यर्थं किलेति शङ्कायामाह। **अथापीति**। अथापि एवं प्रतिबन्धकसत्वेऽपि। हे कृष्ण ! मे हृदयं स्फुरति। कयाचिदाशया प्रकाशमान-मस्ति। स्फुर स्फुरणे लट्। एवं स्थितेऽपि कृष्ण आगत्यानुगृह्णातीति आशा वर्तते। तत्र तादृशहृदयस्फुरणे। हेतुं कारणं उत्तेजकमिति यावत्। न जाने न जानामि। ज्ञा अवबोधने लट्। अत्र सञ्चारधीर इति विशेषणं साभिप्रायं परिकरः। कथं रोमोद्गमं कलयतीत्यसम्भवालङ्कारः। अम्भस्तृप्त इत्यादि तु दृष्टान्तालङ्कारः। गोपीपीनस्तन-रसिकपाणेः अम्भस्तृप्तविदुषः, स्वाद्वम्बुनः रुक्मिणीपाणेः, पानाभावस्य पाणिग्रहणा-भावस्य च बिम्बप्रतिबिम्बभावात्। अथवात्र रुक्मिण्यधरामृतपानरतत्वासम्भावः गम्यत इति अप्रस्तुतप्रशंसा। अथापि हृदयं स्फुरतीति तु प्रतिबन्धकसमकालीनाशारूप-कार्योत्पत्तिरूपा विभावना।

ಓ ಕೃಷ್ಣ! ಗಿರಿ ಶಿಖರದಂತೆ ದುರ್ಗಮವಾದ ಗೋಪಿಕೆಯರ ತುಂಬುಸ್ತನಗಳಲ್ಲಿ ದಿಟ್ಟವಾಗಿ ನಲಿದಾಡಿದ ನಿನ್ನ ಹಸ್ತವು, ನನ್ನ ಕೈ ಹಿಡಿಯಲು ಮುಂದಾಗಬಹುದೆ ? ನನ್ನ ಮೈ ನವಿರೇಳಿಸುವಂತೆ ಮಾಡುವುದೆ ? (ಆ ಚೆಲುವಿಯರೊಡನೆ ಚೆಲ್ಲಾಟವಾಡಿದ ನಿನ್ನ ಕೈಗೆ ನನ್ನ ಅವಶ್ಯಕತೆ ಕಾಣಿಸುವುದಿಲ್ಲ.) ಇದಲ್ಲದೆ ನೀರು ಕುಡಿದು ದಾಹ ನೀಗಿಸಿಕೊಂಡ ಮೇಲೆ ಮತ್ತಾರೂ ನೀರು ಕುಡಿಯಲು ಬಯಸುವುದಿಲ್ಲ, ಅದು ಅಮೃತವೆಂದು ತಿಳಿದರೂ ಬೇಕಾಗುವುದಿಲ್ಲ. ಹಾಗೆ ನಾನು ಎಷ್ಟೇ ಸುಂದರಿ ಎಂದಾದರೂ ಗೋಪಿಯರೊಡನೆ ವಿಹರಿಸಿದ ನಿನಗೆ ನನ್ನ ಅವಶ್ಯಕತೆ ಕಾಣುವುದೇ ಇಲ್ಲ. ಆದರೂ ನನ್ನ ಹೃದಯ ಮಂಕಾಗಿಲ್ಲ. ಏನೋ ಆಸೆ ಜೀವಂತವಾಗಿದೆ. ಅದಕ್ಕೇನು ಕಾರಣವೆಂದೂ ತಿಳಿಯದಂತಾಗಿದೆ.

Oh! Krishna, How your hand, which has already mounted the mountain-like hard breasts of Gopikas, will hold my hand and give thrilling touch? One, who is already satisfied with water, will not drink something even after knowing it as nectar. (Rukmini compares herself with nectar and gopikas with water). Even then, my heart has a ray of hope. The reason for this is unknown.

**भ्राता रुक्मी त्वदितरनरे मां जुहोत्यङ्गशेषां**
**अग्नावेवेत्यरिकर तदा यत्त्वदीयं शरीरम् ॥**
**प्राणे केषां भवति नियतिस्त्वां विना दीनबन्धो**
**राकाया मे शशधर इव प्राणनाथस्त्वमेव ॥४॥**

स्वदुरवस्थां प्रतिपाद्य श्रीकृष्णेनैव तत्परिहार इति प्रतिपादयति । **भ्रातेति** । हे अरिकर चक्रपाणे ! भ्राता ममाग्रजः । रुक्मी । अङ्गशेषां अङ्गं देहः शेषः अवशेषः यस्यास्ताम् । देहमात्रेण अवशिष्टां इत्यर्थः । माम् । त्वत्तः इतरस्मिन् नरे पुरुषे शिशुपाले । यदा जुहोति त्यजति । ओ हाक् त्यागे लट् । तदा । यत् तेऽर्पितमिति त्वदीयं तत् । मम शरीरम् । अग्नौ एव इति भवति । शिशुपालः यदि मां गृह्णाति तदा अहं दग्धा भवामीति भावः । हे दीनबन्धो दीनानां दुर्दशापन्नानां बन्धो उपकारक ! हे कृष्ण ! त्वां विना । प्राणे जीवधारणे । केषां नियतिः निर्धारः भवति । त्वां विना न कोपि जीवतीत्यर्थः । तदेव स्वविषये सदृष्टान्तं वर्णयति । राकाया इति । राकायाः पूर्णिमायाः । शशधर इव चन्द्र इव । मे प्राणनाथः त्वमेव । अतः शिशुपालेनाहं यथा गृहीता न स्यां तथा कुर्वन् मां स्वीकुर्वन् अनुगृहाणेति भावः॥ अत्र अग्नावेवेति पदर्थनिदर्शना । अग्नावेवेति वाक्यार्थस्तु अहं न जीवामीत्यस्य पर्यायोक्तिः । तत्समर्थनं प्राणे केषां नियतिरित्यनेन क्रियत इत्यर्थान्तरन्यासः । राकायाम इति उपमा ।

ಅಣ್ಣ ರುಕ್ಮಿಯು ನೀನಲ್ಲದ ಅನ್ಯ ಜನಕ್ಕೆ, ಮೈ ಮಾತ್ರ ಉಳಿದ ನನ್ನನ್ನು ನೀಡಲು ಹೊರಟಿದ್ದಾನೆ. ಆಗ, ನಿನಗೆ ಸೇರಬೇಕಾದ ನನ್ನ ದೇಹ, ಆ ಇತರವ್ಯಕ್ತಿಯ ಕೈಗೆ ಸಿಕ್ಕರೆ, ಬೆಂಕಿಗಾಹುತಿಯಾದಂತೆ ಸರಿ. ಓ

ಚಕ್ರಪಾಣಿಯೇ ! ನೀನಿಲ್ಲದೆ ಪ್ರಾಣ ಉಳಿಸಿಕೊಳ್ಳಲು ಯಾರಿಗೆ ಮನಸ್ಸಾಗುತ್ತದೆ. ಓ ದೀನ ಬಂಧುವೇ ! ಹುಣ್ಣಿಮೆಗೆ ಚಂದ್ರನಿದ್ದಂತೆ ನನಗೆ ನೀನೇ ಪ್ರಾಣನಾಥನು.

Oh! Krishna, My brother wants to give me, my mere body of course, to somebody other than you. If that is happened, my body, being dedicated to you, is as good as falling into the fire. Oh! Krishna, you are the only helpful relative for the sorrowful; who wants to be alive without you? You are the only my life holder like the moon for the full moon day.

**प्राणा यन्मे त्वदितरसमाक्रम्यमाणास्त्वदीयाः**
**तद्रक्षायां भव कृतमना नैवमीशे निवेद्यम् ॥**
**क्षुद्रेणात्तुं समभिलषितं त्रातुमात्मीयभक्ष्यं**
**कांक्षत्युद्यन्नखहतकरी केसरी नोपदेशम्** ॥५॥

पत्रद्वारा प्रार्थनाभावेऽपि कृष्णेन स्वपरिग्रहः अवश्यकर्तव्यश्चेत् किमु पत्रप्रेषणे सतीति भावेन कृष्णस्य स्वपरिग्रहावश्यकतां प्रतिपादयति । **प्राणा इति** । यत् यस्मात् कारणात् । त्वत्तः[१] इतरेण नरेण शिशुपालेन समाक्रम्यमाणाः समाक्रमणविषयीभूताः । मे प्राणाः देहेन्द्रियादयः इत्यर्थः । त्वदीयाः त्वत्सम्बन्धिनः । तस्मात् कारणात् । तेषां प्राणानां रक्षायाम् । कृतं मनः यस्य तादृशः सन् । त्वमिति शेषः । भव इति एवं ईशे समर्थे त्वयि । न निवेद्यम् । तत्सम्बन्धिपदार्थरक्षणस्य तेनावश्यं कर्तव्यत्वेन तत्र प्रार्थनानपेक्षणादिति भावः । तस्य समर्थनं दृष्टान्तेन करोति । **क्षुद्रेणेति** । क्षुद्रेण कदर्येण निकृष्टेन च प्राणिना । '' क्षुद्रो दरिद्रे कृपणे कदर्येऽल्पनृशंसयोः'' इति हेमः । अत्तुं खादितुम् । समभिलषितं अतीवापेक्षितम् । आत्मीयभक्ष्यं स्वभोक्तव्याहारम् । त्रातुं रक्षितुम् । उद्यद्भिः आक्रमणशीलैः नखैः हतः करी गजः येन सः । केसरी सिंहः । उपदेशं न काङ्क्षति न अपेक्षते । काक्षि कङ्क्षायाम् लट् । तथा च नरसिंहः भवान् त्वदुपभोग्यां मां क्षुद्रगोमायुसदृशात् शिशुपालात् त्रातुं मत्प्रार्थनापेक्षी चेत् न तद्युक्तं भवतीति भावः ।

---

१. 'प्रत्ययोत्तरपदयोश्च' (७-२-९८) इति उत्तरपदे परे त्वादेशः ।

मत्पत्रप्रार्थनादिभिः सन्तृप्त्यभावेऽपि त्वया मत्परिग्रहः कार्य इति च भावो ध्वनितो भवति । ''मा वीरभागमभिमर्षतु चैद्य आरात् गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष'' इति भागवतस्थरुक्मिणीपत्रसन्देशानुगुणमिदं वर्णनमिति ज्ञेयम् । अत्र तत्सम्बन्धि-पदार्थरक्षणे, समर्थस्य तस्येतरोपदेशानावश्यकतेति सामान्यं गम्यते क्षुद्रेणेत्यादि-नेत्यप्रस्तुतप्रशंसा । गम्यं च सामान्यं ईशे नैव निवेद्यमित्यस्य विशेषस्य समर्थक-मित्यर्थान्तरन्यासः ।

''ಓ ದೊರೆಯೆ ! ನಿನಗೆ ಸೇರಬೇಕಾದ ಈ ನನ್ನ ಪ್ರಾಣವನ್ನೆಲ್ಲ ಬೇರೆ ಯಾರೋ ಹೊತ್ತೊಯ್ಯಲು ಬಂದಿದ್ದಾನೆ. ಆದ್ದರಿಂದ ಅದನ್ನು ತಡೆದು ಕಾಪಿಡು'' ಎಂದು ನಾ ನಿನಗೆ ಅರುಹಬೇಕಾದ ಅವಶ್ಯಕತೆಯಿಲ್ಲ. ನಿನ್ನ ವಸ್ತುವನ್ನು ನೀನು ರಕ್ಷಿಸಲು ನಾನು ನಿನಗೆ ಉಪದೇಶಿಸಬೇಕಾಗಿಲ್ಲ. ಸಿಂಹದ ಊಟವನ್ನು ನೀಚ ನರಿಯು ಜೊಲ್ಲು ಸುರಿಸಿ ಆಸೆ ಪಟ್ಟು ನೋಡಿದಾಗ ಆನೆ ಬಗೆದ ಕೂರುಗುರುಳ್ಳ ಆ ಸಿಂಹವು ತನ್ನ ಭಕ್ಷ್ಯದ ರಕ್ಷಣೆಗಾಗಿ ಯಾರ ಉಪದೇಶವನ್ನೂ ನಿರೀಕ್ಷಿಸುವುದಿಲ್ಲವಷ್ಟೆ ( ಹಾಗೆ ನರಸಿಂಹನಾದ ನಿನಗೆ ಸೇರಬೇಕಾದ ನನ್ನನ್ನು ಶಿಶುಪಾಲ ಎಂಬ ನೀಚ ವಂಚಕನಿಂದ ಕಾಪಿಡಲು ಪ್ರತ್ಯೇಕವಾಗಿ ಪ್ರಾರ್ಥಿಸುವ ಅವಶ್ಯಕತೆಯಿಲ್ಲ. )

"Oh! Almighty! My life, which is only yours, is being attacked by others. Therefore make up your mind to protect me". This request need not be made to you. The lion, that is capable of killing elephants with the sharp nails, does not expect any teaching to protect its own hunt from other greedy and wicked animals.

**आगच्छेयं यदि मुररिपो साधुनिन्द्योऽभिसारः**
**त्वत्सान्निध्ये बहुलजननाचीर्णपुण्याभिगम्ये ॥**
**पादन्यासो बहिरहिफणारोपणं स्वादगारात्**
**अन्यद् द्वीपान्तरमिव निजावासतः सुन्दरीणाम्** ॥६॥

''आगच्छामि स्वयमिति हरेऽनुक्तितोऽप्रीतिशङ्का'' इत्यत्र उक्तं स्वयं स्वागमना-कथनं कुत इति शङ्कायां कारणं प्रतिपादयति । **आगच्छेयमिति** । हे मुररिपो ! बहुलैः बहुभिः जननैः जन्मभिः आचीर्णं सम्पादितं यत् पुण्यं तेन अभिगम्ये सम्प्राप्तुं शक्ये ।

त्वत्सान्निध्ये[१] तव सन्निधौ । यदि आगच्छेयम् । स्वयमिति शेषः । यदि स्वयमेव आगमनं कुर्याम् । तर्हि । स व्यापारः इति शेषः । साधुभिः निन्द्यः निन्दनार्हः । अभिसारः सम्भोगार्थं स्त्रियाः कान्तोद्दिष्टनिर्जनस्थानगमनं इति भवेत् । राजकन्यायाः मे वेश्यावत् अभिसारिकेति निन्दा स्यादिति तथाऽहं न करवाणि । किञ्च तथा कर्तुं मया शक्यं च नास्तीति भावेन वर्णयति । **पादन्यास इति** । सुन्दरीणां स्वात् अगारात् भवनात् । 'भवनागारमन्दिरमि'त्यमरः । बहिः । पादयोः न्यासः । अहेः फणायां आरोपणं पाद-प्रक्षेपः इति स्यात् । सुन्दरीणां निजावासतः स्ववासस्थानात् । अन्यत् भिन्नं सर्वमपि । द्वीपान्तरमिव द्वीपस्य मध्यभाग इव स्यात् । तद्वत् गन्तुमशक्यमिति भावः । अत्र आगमनस्य अभिसाराभेदः आर्थ इति निदर्शना । वस्तुतः अभिसारत्वाभावो द्योत्यते बहुलजननाचीर्णपुण्याभिगमत्वविशेषणेनेति औपम्यपर्यवसानान्निदर्शनाया नानुप-पत्तिः । पादन्यास इति रूपकम् । अन्ते चोपमा ।

ಓ ಮುರವೈರಿಯೆ ! ಬಹುಜನ್ಮಗಳಲ್ಲಿ ಗಳಿಸಿದ ಪುಣ್ಯದಿಂದ ಮಾತ್ರ ಸಿಗುವ ನಿನ್ನ ಸನ್ನಿಧಾನಕ್ಕೆ ನಾನೇ ಮುಂದಾಗಿ ಬರಬೇಕಾದುದು ಸರಿಯಾದ ವಿಚಾರ. ಆದರೆ ಹಾಗೆ ಮಾಡಿದರೆ ಅದು ಸಜ್ಜನರು ತೆಗಳುವ ಅಭಿಸಾರದ ಕೆಲಸವೆಂದೂ ಅನ್ನಿಸಬಹುದು. ( ಪೂರ್ವ ನಿರ್ದಿಷ್ಟವಾದ ಸಂಕೇತಸ್ಥಳಕ್ಕೆ ನಲ್ಲನ ಮಿಲನಕ್ಕಾಗಿ ಮೆಲ್ಲನೆ ಯಾರಿಗೂ ತಿಳಿಯದಂತೆ ಓಡಿಬರುವ ಕಾಮಿನಿಯ ನಡೆತೆಯೇ ಅಭಿಸಾರ ) ಇದಲ್ಲದೆ ಸುಂದರ ಕುಲಸ್ತ್ರೀಯರಿಗೆ ತಮ್ಮ ಮನೆಯಿಂದ ಹೊರಕ್ಕೆ ಹೆಜ್ಜೆ ಇಡುವುದಂತೂ ಹಾವಿನ ಹೆಡೆ ತುಳಿದಂತೆ ಕಷ್ಟವಾಗಿರುತ್ತದೆ. ತಮ್ಮ ವಾಸಸ್ಥಳದಿಂದ ಹೊರತಾದ ಎಲ್ಲ ಪ್ರದೇಶಗಳೂ ಅವರಿಗೆ ನೀರನಡುವಿನ ದ್ವೀಪದಂತೆ ದುರ್ಗಮವಾಗಿರುತ್ತದೆ.

Oh! Krishna, the destroyer of Mura! If I myself come to your place, which can only be attained by good deeds in many births; it would be an act of lustful woman keeping an assignation that is always blamed by good persons. For a charming lady stepping out of her house is as good as stepping on the hood of a cobra. All other places except her house are not reachable, like an island.

---

१. त्वत्सान्निध्य इति ॥ चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यानमिति स्वार्थे ष्यञ् । सन्निधिरित्यर्थः ।

मौर्वीं कृत्वा श्रुतिपथगतां ते गुणालिं मनोभूः
चापं गेयं श्रुतिमधुकरैः कीर्तिपुष्पं सुगन्धि ॥
कंसारे त्वां कुसुमविशिखं मां पराजित्य गाढं
बध्नंश्चेतो विकलयति मे त्वत्स्पृहाशृङ्खलेन ॥७॥

इदानीं कृष्णसक्तान्तराया स्वस्या अवस्थां वर्णयति । **मौर्वीमिति** । हे कंसारे ! मनोभूः मनसिजः कामः । श्रुत्योः पन्थाः श्रुतिपथः तं गतां प्राप्ताम् । ते तव । गुणालिं गुणराशिम् । मौर्वीं ज्याम् । ''मौर्वी ज्या शिञ्जिनी गुणः'' इत्यमरः । कृत्वा । मौर्व्या अपि गुणशब्दवाच्यात्वात् गुणस्य मौर्वीत्वं युक्तमिति भावः । एवं मौर्व्याः कर्णान्तानयनमिवात्र गुणस्य श्रुतिपथगतत्वमिति ज्ञेयम् । श्रुतय एव मधुकरास्तैः । गेयं संवर्ण्यं सुगन्धवत् । ते कीर्तिः एव पुष्पं चापं सन्तं कृत्वा । त्वाम् । कुसुमविशिखं कुसुमरूपबाणं कृत्वा । ''पृषत्कबाणविशिखा'' इत्यमरः । मां पराजित्य । मे चेतः । तव स्पृहा अपेक्षा एव शृङ्खलं निगडः तेन । 'शृङ्खलं पुंस्कटौ काञ्च्यां लोहरज्जौ च बन्धने' इति हेमः । गाढं बध्नन् । विकलयति विकलां अङ्गविकलां करोति । मामिति योज्यम् । अत्र सावयवरूपकम् ।

ಓ ಕಂಸಸಂಹಾರಿಯೆ ! ಮನ್ಮಥನು ನನ್ನ ಮೇಲೆ ದಾಳಿ ಮಾಡುವುದನ್ನೂ ಹೇಳುವೆ ಕೇಳು. ವೇದಗಳೆಂಬ ದುಂಬಿಗಳಿಂದ ಗುಂಗಾಟಪಡೆವ ನಿನ್ನ ಸೌಗಂಧ್ಯಭರಿತ ಕೀರ್ತಿಕುಸುಮವೇ ಅವನಿಗೊಂದು ಬಿಲ್ಲು, ಶ್ರುತಿಯವರೆಗೆ ಬರುವ ನಿನ್ನ ಗುಣರಾಶಿಯೇ ಅದರ ಹಗ್ಗ. ನೀನೇ ಅದರಲ್ಲಿ ಹೂಡಿರುವ ಹೂ ಬಾಣ. ಹೀಗೆ ನನ್ನ ಮೇಲೆ ಆ ಬಾಣಬಿಟ್ಟು ದಾಳಿ ಮಾಡಿ ಸೋಲಿಸುವ ಆ ಮನ್ಮಥನು ನನ್ನ ಮನಸ್ಸನ್ನು ನಿನ್ನ ಆಸೆಯೆಂಬ ಬೇಡಿಯಿಂದ ಬಿಗಿದುಹಾಕಿ ಲೂಟಿಮಾಡಿದ್ದಾನೆ.

The group of virtues reaching ears is like a bowstring. Your fame, on which the Vedas are busy in singing like humming bees on a fragrant flower, is like a bow. Using this bow & string and also you as an arrow, the cupid is defeating & troubling me by binding my mind with desire on you, which is like a fetter.

त्वत्तर्षोद्यज्ज्वरभवपरीतापशान्त्यै मुरारे
मज्जन्ती त्वद्गुणगणकथालापपद्माकरेषु ॥

**सन्तप्तास्मि द्विगुणविषमैस्तज्ज्वरैरन्तरङ्गे**
**त्वत्कारुण्यामृतरसमृते नास्ति मे जीविताशा ॥८॥**

कामबद्धकृष्णस्पृहाशृङ्खलफलं वर्णयति । **त्वत्तर्षेत्यादिना** । हे मुरारे ! त्वयि त्वद्विषये तर्षः सम्प्राप्तीच्छा, एव उद्यन् उन्मुखः ज्वरः तेन भवः यः परीतापः[१] तस्य शान्त्यै उपशमाय । तव गुणानां गणस्य कथाया आलापा एव पद्माकराः पद्मपूरिताः कासाराः तेषु । मज्जन्ती सती । द्वौ गुणौ आवृत्ती यथा भवति तथा विषमाः तैः[२] । तादृशस्पृहा एव ज्वरास्तैः । अन्तरङ्गे हृदये । सन्तप्ता अस्मि । तथा च कान्ताभिलाष-बद्धा कामिनी तादृशकान्तगुणकथामग्ना भवति । ततश्च तादृशाभिलाषः द्विगुणितो भवतीति तस्या हृदये तापाधिक्यं जायत इति कृष्णस्पृहाशृङ्खलबन्धनफलं वर्णितं भवति । अथ तत्परिहारोपायं प्रार्थयन्ती वर्णयति । **त्वदिति** । हे मुरारे ! तव कारुण्यं एव अमृतं तस्य रसः तं । ऋते विहाय । मे जीवितस्य आशा नास्ति । तथा च एतादृशशृङ्खलाबन्धविमोचकं त्वत्कारुण्यमात्रमिति भावः । अत्र विषमः । ''अनिष्टस्या-प्यवाप्तिश्च तदिष्टार्थसमुद्यमात्'' इत्युक्तरीत्या प्रकृते ज्वरपरिहारार्थं कृतेनोद्यमेन ज्वरस्य द्विगुणत्वमनिष्टमाप्तमिति समन्वयः । कारुण्यामृत इत्यत्र रूपकम् ।

ಓ ಮುರಾರಿಯೆ ! ನಿನ್ನ ಆಸೆಯೆಂಬ ಏರಿದ ಜ್ವರದಿಂದಾದ ಪರಿತಾಪವನ್ನು ಕಡಿಮೆ ಮಾಡುವುದ ಕ್ಕಾಗಿ ನಿನ್ನ ಗುಣಕಥಾಲಾಪನದ ಸರೋವರಗಳಲ್ಲಿ ಬಹಳವಾಗಿ ಮುಳುಗುತ್ತಿದ್ದೇನೆ. ಆದರೆ ಅದ ರಿಂದ ಆ ಜ್ವರ-ತಾಪಗಳು ಕಡಿಮೆಯಾಗದೇ, ಮೊದಲಿಗಿಂತಲೂ ಇಮ್ಮಡಿಯಾಗಿ ಸಹಿಸದಂತಾ ಗಿವೆ. ಹೃದಯದಲ್ಲೇ ಬೇಯಿಸುತ್ತಿವೆ. ಓ ಕೃಷ್ಣ ! ನಿನ್ನ ಕರುಣೆಯ ಅಮೃತ ರಸ ಹೊರತಾಗಿ ನನಗೆ ಬದುಕುವ ಆಸೆಯಿಲ್ಲ

I am dipping in the ponds of your virtuous stories to bring down the temperature of fever, which is always on the increase due to the desire on you. But by doing this fever is doubled and I am

---

१. परीतापेति । परीत्युपसर्गपूर्वकात् तप सन्तापे इत्यतः घञि परीतापः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६-३-१२२) इति दीर्घः ।

२. द्विगुणविषमैरिति ॥ द्वौ गुणौ यथा भवति तथा द्विगुणम् । द्विगुणं विषमाः द्विगुण-विषमाः तैः । सुप्सुपेति समासः ।

burning within myself very much. Oh! the destroyer of Mura! I have no desire of living without your nectar-like kindness.

**वेणीभूयोद्विलसदलका मे जटावद्विकीर्णाः**
**भूत्येवाङ्गं शशधररुचा चन्दनेनावलिप्तम् ॥**
**नाला बाह्वोः परिवलयिताः कृष्णनागायमानाः**
**कामे भीतिं कलयितुमहं शर्वभूताऽपि खिद्ये** ॥९॥

कामं भीषयितुं दक्षा इव भासमानाऽप्यहं अदक्षेति निरूपयति । **वेणीत्यादिना** । मे मम । वेणीभूय[१] वेणीत्वमापाद्य । उद्विलसन्तः अलकाः चूर्णकुन्तलाः । ''अलका-श्चूर्णकुन्तला'' इत्यमरः । जटावत् विकीर्णाः विकारमापन्नाः अस्तव्यस्ततया विस्तारिता वा सन्तीति अर्थः। मे अङ्गं शरीरम् । भूत्या भसितेन इव । शशधरस्य चन्द्रस्य रुक् प्रभा इव रुक् यस्य तेन । चन्दनेन श्रीगन्धेन अवलिप्तं वर्तते । बाह्वोः परिवलयिताः वलयवत् वेष्टिता नालाः पद्मदण्डाः । कृष्णनागायमानाः कृष्णसर्पवदाचन्तः सन्ति । नालबिस-तन्तूनां धवलत्वेऽपि स्वत एव सितयोः अधुना विरहावस्थायामतिशयितधवलितयोः बाह्वोः पुरतः कृष्णवर्णत्वमिति भावः । तथा च जटाधरत्वेन भसितावलिप्ताकृतित्वेन सर्पधरत्वेन च अहं शर्वभूता अपि रुद्र इव स्थिता अपि । कामे मन्मथे । भीतिं भयं । कलयितुं उत्पादयितुम् । खिद्ये असमर्थास्मि । खिद दैन्ये लट् । कामार्ता कामिनी केशालङ्कारं न करोति । तस्याः तापहरचन्दनलेपः तापप्रदो भवति । सा च स्त्री स्वकान्त एव तत्परा नालं सूत्रं वा गृह्वती स्वाङ्गुलीहस्तकूर्परादिषु कङ्कणवत् तद्वेष्टनं करोतीत्यवस्थानां प्रतिपादनं अत्र बोध्यम् । रुद्रस्य कामहरत्वेन तत्सादृश्येऽपि तत्कार्याकौशलत्वेन रुक्मिण्याः रुद्रतादात्म्यमपि नापेक्षितमिति कृष्णप्राप्तिरेवापेक्षितेति च भावो व्यज्यते । अत्र पादत्रये उपमा । शर्वभूतापि कामे भीतिं कलयितुं खिद्य इति तु विशेषोक्तिः ।

ಹಿಂದೆ ಸುಂದರ ಜಡೆಗಳಾಗಿ ವಿಲಾಸಮಯವಾಗಿದ್ದ ನನ್ನ ಕೂದಲೆಲ್ಲ ಈಗ ಜಟೆಯಂತೆ ಹರಡಿಕೊಂಡಿದೆ. ಬೆಳದಿಂಗಳಂತಿರುವ ಶ್ರೀ ಗಂಧವೆಲ್ಲ ಬೂದಿಯಂತೆ ಮೈಗೆ ಬಳಿದುಕೊಂಡಿದೆ. ಆಚೆ

---

१. वेणीभूयेति ॥ 'अभूततद्भावे च्विः' । गतिसमासः ।

ಈಚೆ ತೋಳಗಳಿಗೆ ಸುತ್ತುಕೊಂಡಿರುವ ತಾವರೆಯ ದೇಟುಗಳಂತೂ ಕೃಷ್ಣಸರ್ಪದಂತಾಗಿವೆ. ಓ ಕೃಷ್ಣ ! ಹೀಗೆ ಜಟಾಧಾರಿಯಾಗಿ ಬೂದಿ ಬಳಿದುಕೊಂಡು ಸರ್ಪಭೂಷಣೆಯಾದ್ದರಿಂದ ನಾನು, ರುದ್ರನೇ ಆಗಿದ್ದರೂ, ಈ ಕಾಮನನ್ನು ಬೆದರಿಸಲಾಗದೇ ಬಳಲುತ್ತಿರುವೆ !

My hairs have become matted, which were beautiful as plaits in the past. The moon-like sandal paste smeared on my body has become ash. The stalks encircling my arms are like serpents. Because of these, though I became Shiva himself, I am struggling to create fear in Kama. (Lord Shiva, who has burnt Kama, is bearing matted hair, ash and serpent)

**आलिख्य त्वां जलधरनिभं मन्दहासावलोकं**
**चित्ते यावत्स्तिमितमनसा कृष्ण सञ्चिन्तयामि ॥**
**तावन्नेत्रस्रुतजलकणाः गण्डमावृत्य धूताः**
**नाभौ पूर्ताः कुचयुगतटात् न क्षमन्ते त्वदीक्षाम्** ॥१०॥

**आलिख्येति** । हे कृष्ण ! मन्दौ हासावलोकौ यस्य तादृशम् । जलधरस्य मेघस्य निभं सदृशं सन्तं च । त्वां आलिख्य चित्रणं कृत्वा । स्तिमितेन प्रेमार्द्रेन मनसा । 'आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं'इत्यमरः । यावत् यदा । चित्ते मन्मनसि । सञ्चिन्तयामि ध्यायामि स्मरामीति वा । समुपसर्गपूर्वकात् चिती संज्ञान इति धातोः लट् । तावत् तत्काल एव । नेत्राभ्यां स्रुताः जलानां कणाः बिन्दवः । गण्डं कपोलम् । आवृत्य । धूताः पतिताः सन्तः । कुचयुगतटात् च धूताः सन्तः । नाभौ पूर्ताः पूरिताः सन्तः । ''पूर्तं त्रिषु पूरिते स्यात्'' इति मेदिनी । त्वदीक्षां त्वद्दर्शनम् । न क्षमन्ते न सहन्ते । क्षमूष् सहने लट् । चित्ररूपेण त्वयि पुरतः आगते सत्यपि न त्वद्दर्शनं शक्यते नेत्रयोः अश्रुरुद्धत्वादिति भावः ।

ಮಳೆ ಮೋಡದಂತೆ ಕಳೆಗೂಡಿದ ನಿನ್ನನ್ನು, ನಗು ನಗುತ್ತ ನೋಟವಿಟ್ಟಂತೆ ಚಿತ್ರದಲಿ ಚಿತ್ರಿಸಿಕೊಂಡು ಮನದೊಳಗೇ ದೃಢವಾಗಿ ಆಲೋಚಿಸಿದ ಕೂಡಲೆ, ಕಣ್ಣುಗಳಿಂದ ಜಲಬಿಂದುಗಳು ಉದುರುತ್ತವೆ. ಕೆನ್ನೆ ಸವರಿ ಧುಮುಕುತ್ತಾ ಎರಡೂ ಸ್ತನಗಳಿಂದ ಕೆಳಗಿಳಿದು ಹೊಕ್ಕಳ ತುಂಬ ತುಂಬುತ್ತದೆ. ಆ ಕಣ್ಣೀರು ಚಿತ್ರದಲ್ಲಿಯೂ ನಿನ್ನನ್ನು ನೋಡಲಡ್ಡಿಪಡಿಸುತ್ತವೆ.

After drawing a picture in which you are smiling, staring at me, and having dark colour of clouds, when I am immersed in thoughts about you with full concentration, the tears flowing from the eyes along the cheeks, falling down from the bosom, and filled the naval. Then the tears do not tolerate my looking at you even in the picture.

**हर्म्ये वातायनकृतमुखी लोकमाना सबाष्पं**
**दृग्भ्यामाशां विगतनिमिषं द्वारकापत्तनस्य ॥**
**पीयूषांशोः शकलमिव तन्मारुतं सेवमानां**
**त्वत्सन्देशाहरणनिपुणं जानती प्रष्टुमीहे ॥११॥**

**हर्म्ये इति**। हर्म्ये उत्तुङ्गगृहविशेषे। ''हर्म्यादि धनिनां वास'' इत्यमरः। वातस्य वायोः आयने आगमने कृतं अभिमुखीकृतं मुखं यस्याः सा सती। द्वारकापत्तनस्य आशां दिशम्। सबाष्पं बाष्पसहितं यथा भवति तथा। विगतनिमिषं विगतः चक्षुर्निमीलनरूपव्यापारः यथा भवति तथा। दृग्भ्यां नेत्राभ्याम्। लोकमाना पश्यन्ती सती। पीयूषांशोः चन्द्रस्य। शकलं इव खण्डं इव। तन्मारुतं तस्याः दिशः वायुम्। सेवमाना सती। तव सन्देशस्य आहरणे आनयने निपुणं सन्तं जानती सती। प्रष्टुं प्रश्नं कर्तुं ईहे इच्छामि। ईह चेष्टायां लट्। द्वारकादिशः सकाशात् आगतो वायुः द्वारकास्थितकृष्णसन्देशं दद्यादिति भावः। वस्तुतो रामायणे वायुपुत्र एव भगवत्-सन्देशाहरणनिपुण इति विदितत्वात् अत्रापि वायौ तादृशभावः भवतीति ज्ञेयम्। स्त्रीणां प्रियसमीपादागतं चेतनाचेतनात्मकं सर्वमपि तद्दूतात्मना भासत इति लोकरीतिरप्यत्र दृश्यते। अत्र शकलमिवेत्युपमा। सन्देशाहरणनिपुणं जानती इति गम्योत्प्रेक्षा।

ಮಹಡಿ ಮೇಲೆ ನಿಂತು, ದ್ವಾರಕೆಯ ದಿಕ್ಕಿನತ್ತ, ರೆಪ್ಪೆ ಅಲುಗಾಡಿಸದೆ ಕಣ್ಣೀರಿನೊಡನೆ ದಿಟ್ಟಿಸುತ್ತ ಬೀಸುವ ತಂಗಾಳಿಗೆ ಎದುರಾಗಿ ಮುಖ ಮಾಡುವೆ. ಚಂದಿರನ ಚೂರುಗಳೇ ಹಾರಿ ಬಂದಂತೆ ಆ ದ್ವಾರಕಾದಿಸೆಯ ಗಾಳಿಯನ್ನು ಆಸ್ವಾದಿಸುತ್ತ, ಆ ವಾಯು ನಿನ್ನ ಸಂದೇಶವೇನಾದರೂ ತಂದಿರುವನೋ ಎಂದು ತಿಳಿಯಲು ಪ್ರಶ್ನಿಸಲು ಪ್ರಯತ್ನಿಸುವೆ.

On the balcony, facing towards the wind coming from the di-

rection of Dwaraka, staring at that direction with tears and without the movement of eyelids, I welcome the wind which is as cool as a piece of moon and thinking him to be capable of bringing your message, would like to ask him about it.

हर्म्ये कृष्णो दिशि दिशि पुरः पृष्टतश्चापि कृष्णः
तल्पे कृष्णः पथि पथि मनोमन्दिरे कृष्णकृष्णः ॥
सर्वः कृष्णो भवति नितरां चिन्तनाज्जुष्टकृष्णात्
नाहं कृष्णाऽभवमपि परं पाण्डुरास्मीति चित्रम् ॥१२॥

**हर्म्ये इति** । हे कृष्ण ! हर्म्ये प्रासाद इत्यर्थः । कृष्णः । कृष्ण एव दृश्यते । दिशि दिशि पुरः पृष्टतश्च अपि कृष्णः । तल्पे शय्यायाम् । 'तल्पं शय्याट्टदारेषु' इत्यमरः । कृष्णः पथि पथि सकलमार्गेषु कृष्णः । मनश्च मन्दिरं च अनयोः समाहारे मनोमन्दिरे अपि कृष्णः । अथवा मन एव मन्दिरं तस्मिन्नित्यर्थः । भासत इति शेषः । एवं रीत्या नितरां जुष्टः सेवितः कृष्णः येन तस्मात् । चिन्तनात् ध्यानात् । सर्वः सर्वोऽपि पदार्थः । मम कृष्णः भवति । कृष्णमयः भवति । परं तु अहं कृष्णा कृष्णवर्णा न अभवम् । अपि तु पाण्डुरा अस्मि इति तु चित्रं आश्चर्यम् । कृष्णध्यानप्रभावेण सर्वत्र मम कृष्णत्वदर्शनेऽपि मयि तु कृष्णविरहतः पाण्डुरत्वमेव दृश्यत इति भावः । अत्र विशेषोक्तिः । इष्यमाणविरुद्धपाण्डुरत्वावाप्तिरिति विषादना ।

ನನಗೆ ಮಹಡಿಯಲ್ಲಿ ಕೃಷ್ಣ. ದಿಕ್ಕು ದಿಕ್ಕಿಗೂ ಕೃಷ್ಣ, ಹಿಂದೆ-ಮುಂದೆ ಕೃಷ್ಣ, ಹಾಸಿಗೆಯಲ್ಲೂ ಕೃಷ್ಣ, ಹೆಜ್ಜೆ ಹೆಜ್ಜೆಗೂ ಕೃಷ್ಣ, ಹೃದಯ ಮಂದಿರದಲ್ಲಂತೂ ಕೇವಲ ಕೃಷ್ಣನೇ ಇದ್ದಾನೆ. ಹೀಗೆ ನಿತ್ಯ ಕೃಷ್ಣ ಚಿಂತನೆಯಲ್ಲಿ ನನಗೆ ಸರ್ವಸ್ವವೂ ಕೃಷ್ಣಮಯವಾಗಿದ್ದರೂ, ನಾನು ಮಾತ್ರ ಕೃಷ್ಣೆ (ಕಪ್ಪು) ಆಗುತ್ತಲೇ ಇಲ್ಲ, ಮತ್ತಷ್ಟೂ ಬಿಳಿಚಿಕೊಳ್ಳುತ್ತಿದ್ದೇನೆ ! ಇದೇ ವಿಚಿತ್ರ.

Krishna is seen in balcony. Krishna is seen in all directions. Krishna is also seen in front and behind. Krishna is seen even in the bed. Krishna is seen in all the paths. Krishna, and only Krishna, is in my mind which is a temple. Everything has become Krishna because of the immersion in the thoughts about Krishna. But it is quite surprising that I have not become Krishna (dark). On the contrary I have become blanch.

पीयूषांशू रदनमहसा निर्जितस्त्वन्निबद्ध-
प्रेमाणं मां खरतरतनुं धारयन् तोतुदीति ॥
गात्रच्छायाजितनिजरुचो नीरदा भिन्दते ते
गम्भीरैर्मे हृदयमदयं गर्जितैः कम्पयन्तः ॥१३॥

**पीयूषांशुरिति** । हे कृष्ण ! ते तव रदनानां दन्तानां महसा प्रकाशेन । निर्जितः पराजितः । पीयूषांशुः चन्द्रः । खरतरतनुं अत्यन्तप्रखरस्वरूपम् । धारयन् धरन् सन् । त्वयि निबद्धं प्रेम यस्यास्तां । मां । तोतुदीति अतिशयेन व्यथते । तुद व्यथने यङ्लुकि लट् । ते तव गात्रस्य शरीरस्य छायया जिता पराजिता निजानां रुक् प्रभा येषां ते । नीरदाः मेघाः । गम्भीरैः । गर्जितैः मेघनिर्घोषैः । मे मम हृदयं कम्पयन्तः सन्तः । भिन्दते विदारयन्ति । भिदिर् विदारणे लट् । कृष्णेन पराजिताः चन्द्रमेघाः कृष्णस्य प्रतीपं कर्तुं असमर्थाः कृष्णप्रियायां मयि खेदाद्युत्पादनेन कृष्णप्रतीकारं कुर्वन्तीति भावः । विरहिणां मेघचन्द्रादिदर्शने व्यथाधिक्यं भवतीति भावः । अत्र प्रत्यनीकम् ।

ನಿನ್ನ ಮಂದಹಾಸದ ಹೊಳಪಿಂದ ಕಳೆಗುಂದಿ ಸೋತಿರುವ ಚಂದ್ರನು ಪ್ರತೀಕಾರ ಮಾಡುತ್ತ, ಕಣ್ಣು ಕೋರೈಸುವ ಬಣ್ಣ ಹಾಕಿಕೊಂಡು, ನಿನಗೇನೂ ಮಾಡಲಾಗದೆ ನಿನ್ನಲ್ಲೇ ಪ್ರೇಮವಿಟ್ಟಿರುವ ನನ್ನನ್ನು ಚುಚ್ಚುತ್ತಿದ್ದಾನೆ. ಓ ಕೃಷ್ಣ ! ನಿನ್ನ ನೀಲ ಮೈ ಬಣ್ಣಕ್ಕೆ ಸೋತುಹೋದ ಕಳೆಯುಳ್ಳ ಮೋಡಗಳೆಲ್ಲ ನಿನಗೇನೂ ಪ್ರತೀಕಾರ ಮಾಡಲಾಗದೆ, ನಿನ್ನಲ್ಲೇ ಒಲವುಳ್ಳ ನನ್ನ ಹೃದಯವನ್ನು ಗಟ್ಟಿಯಾಗಿ ಗುಡುಗಿ ಗುಡುಗಿ ನಡುಗಿಸುತ್ತಿವೆ.

The moon, defeated by the shine of your teeth being unable to take revenge on you, is pricking me, bearing cruel rays and form, because I love you very much. For the same reason, the clouds, whose brightness is defeated by the shade of your body, are making my heart tremble and break with the loud thunder.

आनन्दं मे कमपि कुरुते दूरसंस्थापि मूर्तिः
चेतस्यन्तस्तव मुररिपो फुल्लदिन्दीवराभा ॥
दूरे भानावपि विकसनं पद्मिनी पद्यते यत्
नृत्यत्यब्दे कलितरसिते विप्रकृष्टे मयूरी ॥१४॥

कदाचिद्विरहिणां स्वप्रियसंस्मरणतः भविष्यन्मिलनतश्च आनन्दो भवतीति भावतः वर्णयति । **आनन्दमिति** । हे मुररिपो ! ते तव पुल्लतः इन्दीवरस्य आभा इव आभा यस्याः सा । मूर्तिः रूपम् । दूरसंस्था अपि दूरे विद्यमानापि । मे चेतसि अन्तः । कमपि अपूर्वम् । आनन्दं कुरुते । कथं दूरस्थया मूर्त्या रुक्मिणीचेतस्यानन्दसम्भव इति शङ्कां दृष्टान्तप्रदर्शनपूर्वकं समाधत्ते । यत् यस्मात् कारणात् । भानौ सूर्ये । दूरे अपि पद्मिनी पद्मसङ्घातः । विकसनं विकासम् । पद्यते प्राप्नोति । पद गतौ इति धातोः लट् । कलित-रसिते कृतगर्जिते । ''मेघनिर्घोषे रसितादि च'' इत्यमरः । अब्दे मेघे । विप्रकृष्टे अपि दूरस्थितेऽपि चक्षुषा अगम्येऽपि । मयूरी यस्मात् नृत्यति । नृती गात्रविक्षेपे लट् । तस्मात् दूरस्थितयापि मूर्त्या आनन्दं भवतीति युक्तमिति भावः । तदर्थं मयूर्या मेघनादवत् त्वत्सन्देशः ममापेक्षित इति भावः । अत्र दृष्टान्तः ।

ಓ ಮುರಾರಿಯೆ ! ಅರಳಿದ ಕನ್ನೈದಿಲೆಯಂತೆ ಸೊಗಸಾಗಿರುವ ನಿನ್ನ ಮುದ್ದು ರೂಪವು ದೂರವಿದ್ದರೂನು ನನ್ನ ಹೃದಯಕ್ಕೆ ಏನೋ ಒಂದು ಆನಂದವನ್ನು ಉಂಟುಮಾಡುತ್ತಿದೆ. ಸೂರ್ಯನು ದೂರವಿದ್ದರೂನು, ತಾವರೆಯ ತವರಾದ ಸರೋವರವು ಅರಳುವುದಷ್ಟೆ. ಗುಡುಗುವ ಕಾರ್ಮೋಡ ದೂರವಿದ್ದು ಕಾಣದಿದ್ದರೂ ನವಿಲು ಕುಣಿಯುತ್ತದೆಯಷ್ಟೆ

Oh! Krishna, your blossomed Lilly-like glittering figure, even though it is quite far, fetches some unknown pleasure to my heart. In the morning, lotus flower blossoms, even though the sun is placed very far. Though thundering cloud is not visible, the peacock dances.

**स्त्रैणं दोषाकुलमिति मनो मास्तु शङ्कास्पदं ते**
**शुद्धां वह्नौ सकृदुपगमादेव सीतामवेदीत् ॥**
**सीताजानिः प्रतिदिनमहं मन्मथाग्नौ निकामं**
**पातं पातं बिससितवपुश्चास्मि साक्षी स्मरोऽत्र ॥१५॥**

**स्त्रैणमिति** । हे कृष्ण ! ते मनः । स्त्रैणं[1] स्त्रीसमूहः । दोषैः आकुलं इति शङ्काया

१. स्त्रैणमिति ॥ 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' (४-१-१७) इति समूहार्थे नञ् । वृद्धिः णत्वं च ।

आस्पदं स्थानम् । ''आस्पदं पदकृत्ययोः'' इति मेदिनी । मास्तु मा भवतु । सीताजानिः[1] सीतापतिः रामः । वह्नौ । सकृत् एकवारम् । उपगमादेव प्रवेशादेव । सीतां शुद्धां सतीम् । अवेदीत् ज्ञातवान् । विद ज्ञाने लुङ् । अहं तु । मन्मथः कामः एव अग्निः तस्मिन् । प्रतिदिनम् । पातं पातं अतीव पतित्वा । निकामं अत्यन्तम् । बिसवत् सितं वपुः यस्याः सा । अस्मि । अस भुवि लट् । अत्र मदीयसितत्वे । स्मरः मन्मथः । साक्षी प्रमाणम् । रुक्मिण्या विरहाग्नितः पाण्डुरत्वमिति भावः । तथा च ''स्त्रियश्चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्य'' इत्याभाणकानुसारेण कृष्णेन रुक्मिणीचारित्र्यविषये शङ्का न कर्तव्येति तत्परिग्रह एव करणीय इति भावः ॥ अत्र स्त्रैणं दोषाकुलमिति शङ्का न करणीयेत्यस्य समर्थनीयस्य समर्थनं उत्तरभागेन क्रियत इति काव्यलिङ्गम् । तत्र सकृदुपगमप्रतिदिनोपगमरूपव्यत्यासेन कैमुत्यस्य गम्यत्वात् गम्यकाव्यार्थापत्तिसाङ्कर्यं चास्ति ।

ಓ ಕೃಷ್ಣ! ಹೆಂಗಸರ ನಡತೆ ಸರಿಯಿರದೆಂದು ಮನದೊಳಗೆ ಶಂಕೆ ಮಾಡಬೇಡ. ನೀನು ಸೀತಾಪತಿಯಾಗಿದ್ದಾಗ ಒಮ್ಮೆ ಅಗ್ನಿಯಲ್ಲಿ ಪ್ರವೇಶಿಸುವುದರಿಂದಲೇ ಸೀತೆಯನ್ನು ಪರಿಶುದ್ಧಳೆಂದು ನಿರ್ಧರಿಸಿದ್ದೆಯಷ್ಟೆ. ಆದರೀಗ ನಾನು ಪ್ರತಿದಿನವೂ ಕಾಮಾಗ್ನಿಯಲ್ಲಿ ಬಹಳವಾಗಿ ಬಿದ್ದು ಬಿದ್ದೂ ಕಮಲದ ದೇಟನೊಳಗಿನ ಎಸಳಿನಂತೆ ಬೆಳ್ಳಗಾಗಿಯೇ ಇದ್ದೇನೆ. ಸುಟ್ಟು ಕಪ್ಪಾಗಿಲ್ಲ. ಇದಕ್ಕೆ ಆ ಕಾಮನೇ ಸಾಕ್ಷಿಯಾಗಿದ್ದಾನೆ. ಆದ್ದರಿಂದ ನನ್ನನ್ನೂ ಸೀತೆಯಂತೆ ಪರಿಶುದ್ಧಳೆಂದು ನೋಡು.

Oh! Krishna, do not bring doubt in your mind that all women are characterless. In the incarnation as Rama, you understood Sita as pure because of her entering into the fire only once. Now by entering the fire of Kama (lust) very often everyday, my body is becoming whiter, like the fibers of lotus stalk, thereby proving my purity. The creator of this fire, Manmatha himself is a witness to this.

**आग्नेयास्त्रं शशिकरमयं मन्मथेन प्रयुक्तं**
**भङ्क्तुं दृग्भ्यां विसरदुदकं वारुणास्त्रं प्रयुञ्जे ॥**

---

१. सीताजानिरिति ॥ सीता जाया अस्येति सीताजानिः । 'जायाया निङ्' (५-४-१३४) इति जायाशब्दे यकारादाकारस्य निङ् । ङकार इत् 'लोपो व्योर्वलि; (६-१-६६) इति यलोपः ।

**छिन्ते मर्मात्यविषहमनोवेदनाभिः स्मरो यत्**
**त्वत्कारुण्यामृतरसमृते नास्त्रमत्रेति वेद्मि ॥१६॥**

**आग्नेयास्त्रमिति** । मन्मथेन प्रयुक्तम् । शशिनः चन्द्रस्य कराः किरणाः तद्रूपं शशिकरमयम्[१] । आग्नेयास्त्रं भङ्क्तुं । दृग्भ्यां नेत्राभ्यां । विसरन्ति उदकानि यस्य तत् । वारुणास्त्रं प्रयुञ्जे प्रयुनज्मि । युजिर् योगे लट् । स्मरः मन्मथः । अत्यविषहाभिः अत्यन्तं सोढुमशक्याभिः मनसः वेदनाभिः । मर्म मर्मस्थानम् । छिन्ते छिनत्ति । छिदिर् द्वैधीकरणे लट् । इति यत् । तादृशे अत्र वेदनास्त्रविषये । तव कारुण्यमेव अमृतस्य रसस्तम् । ऋते विना । अस्त्रं अन्यत् अस्त्रम् । न वेद्मि न जानामि । विद ज्ञाने लट् । विरहिणां चन्द्रोदयदर्शने सति अश्रुधारा आपततीति अपरिहार्यमनोवेदना च जायत इति भावः। अत्र चन्द्रोदये सति रोदनं करोमीत्यस्य भङ्ग्यन्तरेण प्रतिपादनात् पर्यायोक्तिः। रूपकसाङ्कर्यं च ।

ಉದಯಿಸಿದ ಕೆಂಬಣ್ಣದ ಚಂದ್ರನೆಂಬ ಆಗ್ನೇಯ ಅಸ್ತ್ರವನ್ನು ಮನ್ಮಥನು ನನ್ನ ಮೇಲೆ ಪ್ರಯೋಗಿಸಿದಾಗ, ಅದನ್ನು ಮುರಿಯಲು ನಾನು ಎರಡೂ ಕಣ್ಣುಗಳಿಂದ ನೀರು ಸುರಿಸುತ್ತ ವರುಣಾಸ್ತ್ರ ಬಿಡುತ್ತಿರುವೆ. ಆದರೆ ಮರ್ಮಚ್ಛೇದಕವಾದ ಸಹಿಸಲಸಾಧ್ಯವಾದ ಮಾನಸಿಕ ವೇದನಾಸ್ತ್ರಗಳಿಂದ ಮನ್ಮಥನು ಚುಚ್ಚಿದ್ದಕ್ಕೆ ನಿನ್ನ ಕರುಣಾ ಅಮೃತರಸ ಹೊರತು ಮತ್ತಾವ ಪ್ರತ್ಯಸ್ತ್ರವಿಲ್ಲವೆಂದು ತಿಳಿದಿದ್ದೇನೆ.

To break Agneyastra, (the fire missile) called the moonlight shot by Kama, I shot Varunastra (water missile), showering water through my eyes. But when the Kama is pricking me through numerous pains that are intolerable to my heart, then to counter this, I do not know any other weapon than your nectar-like mercy.

**केचिन्मासाः समतिगमितास्त्वन्निषक्तान्तरायाः**
**काष्ठा वर्षो युगमपि कला तत्र कल्पो मुहूर्तम् ॥**
**आसीदास्तामविषहतरो यन्निमेषोऽद्य कष्टं**
**ब्रह्मायुष्यं तिरयति हरे तर्कयास्मान्ममाधिम् ॥१७॥**

---

१. शशिकरमयमिति ॥ 'तत्प्रकृतवचने मयट्' (५-४-२१) इति तादर्थ्ये मयट् ।

**केचिदिति** । हे हरे ! त्वयि नितरां सक्तं अन्तरं मनः यस्यास्तस्याः त्वन्निषक्तान्तरायाः मम इति शेषः । केचित् मासाः समतिगमिताः अतीव प्रयत्नेन यापिताः सन्ति । तत्र तेषु मासेषु । काष्ठा काष्ठानामककालविशेषः । वर्षः संवत्सररूपः आसीत् । कला तन्नामककालविशेषः । युगं कृतत्रेताद्वापरादिरूपं आसीत् । ''युगं युग्मे कृतादिषु'' इत्यमरः । मुहूर्तं तन्नामककालविशेषः । कल्पः आसीत् । आस्तां भवतु । परं तु अद्य अविषहतरः[1] अत्यन्तं विषोढुं अशक्यः । निमेषः तन्नामककालविशेषः । ब्रह्मणः आयुष्यं द्विपरार्धान्तकालविशेषम् । तिरयति आच्छादयति । इति यत् । अस्मात् हेतोः। मम आधिं मानसीव्यथाम्। तर्कय ऊहस्व । तर्क भाषायां लोट् । कलाकाष्ठादि-स्वरूपं तु - ''अष्टादशनिमेषाः स्युः काष्ठा त्रिंशत्तु ताः कलाः । तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् । '' इत्युक्तं ज्ञेयम् । विरहावस्थायां कालयापनं अतीव कष्टकरमिति भावः । केचिन्मासा इत्युक्त्या क्रथकैशिकप्रदत्तराज्याभिषेकसमये कृष्णाय भीष्मकेण स्वकन्या रुक्मिणी यदा प्रदत्ता, ततश्च रुक्मिप्रभृतिभिः कृष्णद्वेषेण दुष्टप्रवृत्तिर्यदा विहिता तत आरभ्येयं स्थितिरिति भावो ध्वन्यते । अत्र काष्ठा वर्ष इत्यादौ रूपकम् । निमेषः ब्रह्मायुष्यं तिरयतीति तु परनामककालाधिक इत्यस्य भङ्ग्यन्तरेण प्रतिपादनं पर्यायोक्तम् ।

ಓ ಹರಿಯೆ ! ನಿನ್ನಲ್ಲಿ ಹೃದಯ ನೆಲೆಗೂಡಿಸಿದ ನಾನು ಹಲವು ತಿಂಗಳುಗಳನ್ನೇ ತಳ್ಳಿ ಹಾಕಿದ್ದೇನೆ. ಅಲ್ಲಿ ಕಾಷ್ಠವು ವರ್ಷವಾಗಿ , ಕಲಾ ಯುಗವಾಗಿ , ಮುಹೂರ್ತವಂತೂ ಒಂದು ಕಲ್ಪವೇ ಆಗುವು ದಾದರೆ ಆಗಲಿ. ಆದರೀಗ ಒಂದು ನಿಮಿಷವೂ ಸಹ ಸಹಿಸಲಸಾಧ್ಯವಾಗಿ ಬ್ರಹ್ಮನ ಆಯುಷ್ಯವನ್ನು ಮೀರಿಸುತ್ತಿದೆ. ಇದರಿಂದ ನನ್ನ ಮನೋವೇದನೆಯನ್ನು ಊಹೆ ಮಾಡು.

While my mind is attached to you, so many months are gone by. During that period, Kashta (apprx. 0.267 sec) has become years, Kala (8 sec.) has become Yuga (43.20 lakhs of years), Muhurtha (48 min.) has become Kalpa (one day & night of Brahma, 864 crores of years). Let it happen, but now the

---

१.अविषहतर इति ।। 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' (८-३-७०) इति सूत्रेण 'षह मर्षणे' इति धातोः षत्वम् ।

Nimisha (a fraction of fraction of a second) is also becoming more than the lifetime of Brahma ( in the universe the life span of Brahma is the highest which is called Para). Through this please guess the pains, my mind is undergoing.

**अल्पज्ञत्वात्तुहिनकिरणो विप्रलम्भार्तरामा-**
**हत्यादोषाद्वपुषि गतवान् कृष्णतामीषदेव ॥**
**सर्वज्ञत्वात्तदधिकमभूत् नित्यमद्धत्ययाद्य**
**तन्मन्ये त्वां कलुषरहितं कृष्ण कृष्णीभवन्तम् ॥१८॥**

**अल्पज्ञत्वादिति**। तुहिनकिरणः चन्द्रः। अल्पज्ञत्वात् अल्पज्ञानवत्वात्। विप्रलम्भेन विरहेण आर्तानां रामाणां रोहिण्यतिरिक्तनक्षत्रनारीणां हत्या हिंसा एव दोषः तस्मात्। वपुषि शरीरे। कृष्णतां कृष्णचिह्नम्। ईषत् एव स्वल्पमेव। गतवान् प्राप्तवान्। अद्य। हे कृष्ण ! सर्वज्ञत्वात्। तव सर्वज्ञानसत्वात्। नित्यं मम विरहार्ताया मम हत्यया हिंसारूपया। तत् कृष्णत्वम्। स्त्रीहिंसादोषसम्भवकृष्णत्वम्। अधिकं अभूत्। तत् तस्मात् कलुषरहितं त्वां कृष्णीभवन्तं[१] कृष्णात्मना विद्यमानं मन्ये ऊहे। स्त्रीहिंसादोषेण कलङ्कः भवतीति चन्द्रे दृश्यते। चन्द्रस्य ज्ञानपूर्वकदोषाकरणात् तल्लेपः अल्प एव। कृष्णस्तु रुक्मिणीं विरहतः हिनस्तीति, पत्रप्रेषणाभावेऽपि सर्वज्ञत्वेन ज्ञानपूर्वकमेवैवं करोतीति, ज्ञातदोषस्य बलिष्ठत्वेन कृष्णस्य सर्वत्र कृष्णवर्णप्राप्तिः स्यादिति भावः। चन्द्रः रोहिण्यां प्रीतिविशेषं कुर्वन् इतरषड्विंशपत्नीनां विरहहिंसां कृत्वा ततः तत्पितृदक्षशापेण यक्ष्मरोगं गतवान् इति कथा। अत्र उत्प्रेक्षा।

ಓ ಕೃಷ್ಣ! ಚಂದ್ರನು ವಿರಹದಿಂದ ಬಳಲಿದ ಹೆಣ್ಣುಗಳಿಗೆ ಹಿಂಸೆ ಕೊಟ್ಟ ದೋಷಕ್ಕೆ ಮೈಯಲ್ಲಿ ಕಪ್ಪು ಚುಕ್ಕೆಯೊಂದನ್ನು ಹೊಂದಿದನಂತೆ. ( 27 ನಕ್ಷತ್ರಗಳು ಚಂದ್ರಪತ್ನಿಯರು. ಅವರಲ್ಲಿ ರೋಹಿಣಿಯ ಮೇಲೆ ಮಾತ್ರ ಒಲವು ತೋರುತ್ತ, ಇತರ ಪತ್ನಿಯರಿಗೆ ವಿರಹದ ಹಿಂಸೆಕೊಟ್ಟ ತಪ್ಪಿಗೆ ಚಂದ್ರನು ಮಾವನಾದ ದಕ್ಷನ ಶಾಪಕ್ಕೆ ತುತ್ತಾಗಿ ಕಪ್ಪು ಚುಕ್ಕೆ ಪಡೆಯುವಂತಾಯಿತೆಂದು ಪುರಾಣದ ಕಥೆ. ) ಅವನು ಅಲ್ಪಜ್ಞನಾದ್ದರಿಂದ ಆ ಕಪ್ಪು ಸ್ವಲ್ಪವೇ ಬಂದೆರಗಿತು. ಆದರೆ ನೀನು ಸರ್ವಜ್ಞನಾದ್ದರಿಂದ, ವಿರಹತಪ್ತಳಾದ ನನ್ನನ್ನು ನಿತ್ಯವೂ ಚುಚ್ಚುತ್ತಿರುವುದರಿಂದ, ನಿನಗೆ ಒಂದೇ ಒಂದು ಕಾಲುಷ್ಯವಿಲ್ಲದಿದ್ದರೂ

---

१. कृष्णीभवन्तमिति ॥ अकृष्णः कृष्णः भवन् कृष्णीभवन्। तम्।

ಕೂಡ ಪೂರ್ಣವಾಗಿ ನೀನು ಕೃಷ್ಣನೇ (ಕಪ್ಪು) ಆಗಿರಬೇಕೆಂದು ನಾನು ಊಹಿಸುತ್ತಿದ್ದೇನೆ. (ಚಂದ್ರವಂಶದಲ್ಲಿ ಅವತರಿಸಿದ ಕೃಷ್ಣನ ನಡತೆ ವಂಶೋಚಿತವಾದಂತೆ ತೋರುತ್ತದೆ. ಎಂದೂ ಭಾವವು )

The moon has a black mark on his body, because he tortured ladies by making them to suffer from painful separation. Because he had less knowledge, the black mark also is small. Oh! Krishna, you are knowledgeful. So I presume that, by torturing me through separation all the time, even though you are unblemished, became Krishna (black Colour) completely.( In Puranas, it is told that, Chandra (moon),showing more love towards Rohini, ignored other 26 wives. Then, his father-in-law, Daksha cursed him. Therefore he got a black mark. Similarly, for making Rukmini to suffer from separation, Krishna also got the dark colour. This is a poetic fancy.)

**सन्तप्तायास्तव विरहतः शान्तये मत्प्रतीके**
**पर्यास्तीर्णा विकलितदलाः पङ्कजिन्यो भवन्ति ॥**
**गन्धःश्लिष्टो मलयजनितस्तत्क्षणादेव शुष्यन्**
**ज्वालो भूत्वा मम हुतभुजस्तापवृद्धिं तनोति** ॥१९॥

**सन्तप्ताया इति** । हे कृष्ण ! तव विरहतः सन्तप्तायाः । ममेति शेषः । शान्तये तापोपशमाय । मत्प्रतीके मदङ्गे । ''अङ्गं प्रतीकोऽवयवः'' इत्यमरः । पर्यास्तीर्णाः परितः विस्तारिताः । पङ्कजिन्यः पङ्कजमालाः । विकलितदलाः निर्दलाः । भवन्ति । मच्छरीरतापतः पङ्कजदलानामपि पातो भवतीति भावः । मत्प्रतीके श्लिष्टः लेपितः । मलयजनितः गन्धः । तत्क्षणादेव शुष्यन् सन् । मम हुतभुजः विरहाग्नेः ज्वालो भूत्वा ज्वालात्मना परिणतः सन् । तापस्य वृद्धिं तनोति करुते । तनु विस्तारे लट् । तापशान्त्यै स्वीकृतैः पङ्कजगन्धादिभिरपि तापाधिक्यमेव जायत इति भावः । तत्र पङ्कजस्य रक्तवर्णस्य ज्वलदङ्गाररूपत्वं, तज्ज्वालरूपत्वं गन्धस्येति भावः । अत्र हुतभुज इत्यतिशयोक्तिः । ज्वालो भूत्वेति रूपकम् । तापशान्तये श्लिष्टः गन्धः तापवृद्धिं तनोतीति तु विषमः ।

ಓ ದೇವ! ನಿನ್ನ ವಿರಹದಿಂದ ಬೆಂದುಹೋಗಿ ಅದರ ಶಾಂತಿಗಾಗಿ ನಾನೀಗ ಮೈ ಮೇಲೆ ಕೆಂದಾವರೆಯ ದಳಗಳನ್ನು ಉದುರಿಸಿ ಹರವಿಕೊಂಡಿದ್ದೇನೆ. ಮಲೆನಾಡಿನ ಶ್ರೀಗಂಧವನ್ನು ಲೇಪಿಸಿಕೊಂಡಿದ್ದೇನೆ. ಆದರೆ ಅದು ತಕ್ಷಣವೇ ಒಣಗಿ ಹೋಗಿ ಕೆಂಡದ ಮೇಲೆ ಜ್ವಾಲೆಗಳಂತಾಗುತ್ತ ನನ್ನೊಳಗಿರುವ ಬೆಂಕಿಯ (ವಿರಹಾಗ್ನಿಯ) ತಾಪವನ್ನು ಮತ್ತಷ್ಟು ಹೆಚ್ಚು ಮಾಡುತ್ತಿದೆ.

To reduce the heat generated due to separation, the spread lotus flowers on my body are loosing their petals. The smeared sandal paste is immediately becoming dry and acting as blaze, increasing heat of my separation fire.

**ग्रीष्मोद्रिक्तैर्दिनकरकरैश्चातकीवातिदग्ध-**
**स्वान्ता कामानलसमशरैः पुष्पवेषं दधानैः ॥**
**वर्षन् मेघः सुखयति यथा तां सुधाम्भोनिपातैः**
**तद्वत्त्वं मां सुखय करुणापाङ्गपीयूषपातैः** ॥२०॥

**ग्रीष्मोद्रिक्तैरिति** । ग्रीष्मर्तौ उद्रिक्तैः प्रवृद्धैः । दिनकरस्य सूर्यस्य करैः किरणैः । चातकी इव । पुष्पवेषं पुष्पस्य आकारम् । दधानैः धरद्भिः । कामस्य अनलसमाः अग्निसमा ये शराःबाणाः तैः । अहं इति शेषः । अतिदग्धस्वान्ता अत्यन्तं दग्धं स्वान्तं हृदयं यस्यास्तादृशी सती । अस्मि इति शेषः । वर्षन् वृष्टिकरः । मेघः । सुधावत् अम्भांसि तेषां निपातैः । तां चातकीम् । । यथा सुखयति । सुखं प्रापयति । सुख तत्क्रियायाम् लट् । तद्वत् हे कृष्ण ! त्वम् । करुणानि कारुण्ययुक्तानि । अपाङ्गयोः नेत्रान्तयोः पीयूषाणि कटाक्षामृतानि तेषां पातैः । मां सुखय सुखितं कुरु । अत्र उपमा ।

ಬೇಸಿಗೆಯ ಸೂರ್ಯನ ಪ್ರಖರ ಕಿರಣಗಳಿಂದ ಚಾತಕಪಕ್ಷಿಯು ಹೃದಯದಲ್ಲೇ ಬೇಯುವಂತೆ, ಹೂವೇಷ ತೊಟ್ಟ ಕಾಮಾಗ್ನಿಯ ಅಪಾರ ಬಾಣಗಳಿಂದ ನಾನೂ ಸಹ ಒಳಗೊಳಗೇ ಬಹಳವಾಗಿ ಬೆಂದಿದ್ದೇನೆ. ಓ ಕೃಷ್ಣ! ಹೇಗೆ ಮಳೆ ಮೋಡವು ಅಮೃತಧಾರೆ ಸುರಿಸಿ ಆ ಚಾತಕಿಗೆ ತಂಪೆರೆವುದೋ, ಹಾಗೆ ನೀನು ಕರುಣೆಯ ಕುಡಿನೋಟದ ಅಮೃತಧಾರೆಯಿಂದ ನನ್ನನ್ನು ಸುಖಗೊಳಿಸು.

By the Kama's fire-like arrows, in the guise of flowers, my heart is burnt like the heart of Chataka Bird that burns due to the heat of sun in peak summer. As the rainy clouds give plea-

sure to that bird, by showering nectar-like water, similarly, you give pleasure to me by showering nectarlike your merciful sight.

गात्रस्पर्शं तव कलयितुं त्वन्निबद्धान्तरङ्गाः
वर्तन्ते ते घनतनुरुचा मोहिताः सारसाक्ष्यः ॥
ता वर्तन्तामियदरिधर त्वन्निशान्ताङ्गणान्तः
त्वत्पादाब्जप्रसृमररजोमार्जनं तत्तु याचे ॥२१।

**गात्रस्पर्शमिति** । हे अरिधर चक्रधर कृष्ण ! ते तव । घनवत् मेघसदृशस्य तनोः शरीरस्य रुचा कान्त्या । मोहिताः आकृष्टाः । सारसाक्ष्यः सुन्दरस्त्रिय इति यावत् । तव गात्रस्य शरीरस्य स्पर्शम् । कलयितुं सम्प्राप्तुम् । त्वयि निबद्धं अन्तरङ्गं यासां ताः सत्यः । वर्तन्ते । चेत् इति शेषः । ताः वर्तन्ताम् । तास्त्यजेति नाहं वदामि । अपि तु यत् । तव निशान्तस्य सदनस्य अङ्गणस्य प्राङ्गणस्य अन्तः । तव पादाब्जयोः प्रसृमराणि रजांसि तेषां मार्जनं मार्जनरूपोद्योगः अस्ति । तत् इयत्तु तदेतावन्मात्रं याचे । याचृ याञ्चायाम् लट् । तत्कर्मलाभेनापि त्वत्सान्निध्यलाभेन विरहशोकनिवारण-मिति भावः। 'मां राक्षसेन विधिनोद्वह वीर्यशुल्का' मिति भागवतोक्तमर्थं सूचयत्यनेन । अत्र अनुज्ञालङ्कारः ।

ಓ ಒಡೆಯ ! ಅಲ್ಲಿ ನಿನ್ನ ಮೇಘಶ್ಯಾಮಲ ಮೈ ಬಣ್ಣಕ್ಕೆ ಮರುಳಾದ ಮೃಗನಯನೆಯರು, ನಿನ್ನ ಮೈ ಮುಟ್ಟುವ ಆಸೆಗೂಡಿ, ನಿನ್ನಲ್ಲೇ ಹೃದಯ ನೀಡಿ, ಇದ್ದರೆ ಇರಲಿ. (ಅವರನ್ನು ದೂರಮಾಡಿ ನನ್ನ ಬರ ಮಾಡಿಕೊ ಎಂದು ನಾ ಬೇಡುತಿಲ್ಲ.) ನಿನ್ನ ಮನೆಯಂಗಳಕ್ಕೆ ದೊರೆತಿರುವ ನಿನ್ನ ಪಾದಕಮಲದ ಧೂಳಿಯನ್ನು ಗುಡಿಸುವುದನ್ನಷ್ಟೇ ಬೇಡುತ್ತಿದ್ದೇನೆ. ಕರುಣೆ ಮಾಡು.

Oh the Chakrapane! let the fawn-eyed ladies, by getting attracted towards your cloud like glittering body, with their mind immersed in you, be there to have enjoyment in touching your body. But I only beg to be given a chance to sweep the dust of your lotus feet that spread in your houseyard.

पद्मोन्मुक्तं मधुकरकुलं तीक्ष्णभानोर्मयूखैः
गुञ्जारावद्विगुणितमनोवेदनं वीक्षमाणा ॥

**नीलाम्भोजं मनसि च वपुः श्यामलं धारयन्ती**
**मूर्छं मूर्छं परिजनकृतोद्बोधमासा दिवास्मि** ॥२२॥

**पद्मोन्मुक्तमिति** । तीक्ष्णभानोः सूर्यस्य । मयूखैः किरणैः । पद्मात् उत्मुक्तं बहिरागतम् । मधुकराणां भृङ्गाणां कुलम् । वीक्षमाणा सती । गुञ्जारावैः द्विगुणितं मनसः वेदनं धारयन्ती धरन्ती सती । नीलाम्भोजं वीक्षमाणा च । ते इति शेषः । श्यामलं वपुः मनसि धारयन्ती सती । मूर्छं मूर्छं अतिशयेन मूर्च्छां प्राप्य । परिजनैः दासीजनैः कृतं उद्बोधं । दिवा । आप्ता अस्मि । दिवा उद्बोधः न आवश्यकः । अथापि मम दिवा अनेकवारं तदावश्यकता भवति । तत्र हेतुः पद्मादिदर्शनजातमूर्च्छा । रात्रौ मुकुलितपद्मगर्भबद्धं मधुपं दिवा पद्मविकासे बहिर्गतं दृष्ट्वा पद्मवत् विद्यमानां स्वां त्यक्ता मधुपवन्नीलरूपः कृष्णो निर्गत इति भासते । रात्रौ हि कृष्णः स्वप्ने रुक्मिणीबाहुबद्धः स्यात् स्वप्ने । सूर्योदये जागरेण स्वप्नसमाप्त्या कृष्णो दूरं गत इति भावः । अथवा तीक्ष्णभानुः रुक्मी । तद्व्यापारेण पद्मसदृशाया रुक्मिण्याः मधुपसदृशकृष्णेन वियोग इति भावः । अन्यत्तु स्पष्टम् । अत्र मनसि वपुर्धारयन्तीति गम्यस्मृतिमदलङ्कारः । मधुकरकुलं इत्यादि तु अप्रस्तुतप्रशंसा । प्रस्तुतस्ववियुक्तकृष्णविचारगमकत्वात् सादृश्यमूलतयेति ।

ಬೆಳಗಾದರೆ ಸಾಕು ಸೂರ್ಯಕಿರಣಗಳಿಂದ ಕಮಲವು ಅರಳುತ್ತದೆ. ಆದರೆ ಒಳಗೆ ಬೆಚ್ಚಗೆ ವಶವಾಗಿದ್ದ ದುಂಬಿಗಳೆಲ್ಲ ಅಲ್ಲಿಂದ ಅಗಲುವುದಕ್ಕೂ ಅದು ಕಾರಣವಾಗುತ್ತದೆ. ಅಯ್ಯೋ! ಕಮಲವು (ರುಕ್ಮಿಣಿಯು) ನೀಲ ಬಣ್ಣದ ದುಂಬಿಯಿಂದ (ಕೃಷ್ಣನಿಂದ) ಬೇರೆಯಾಯಿತಲ್ಲ! ಎಂದು ಮನ ನೋಯ್ಯುತ್ತದೆ. ದುಂಬಿಯ ಗುಂಗಾಟಕ್ಕೆ ಅದು ಮತ್ತೂ ಇಮ್ಮಡಿಯಾಗುತ್ತದೆ. ಇನ್ನು ಕನ್ನೈದಿಲೆಯನ್ನು ಕಂಡಾಗ ನಿನ್ನ ನೀಲರೂಪವೇ ಹೃದಯ ತುಂಬಿ ಬಿಡುತ್ತದೆ. ಹೀಗೆ ಹಗಲೆಲ್ಲ ನಾನಾ ವೇದನೆಗೆ ಮೂರ್ಛೆ ಹೊಂದುತ್ತ ದಾಸಿಯರಿಂದ ಎಚ್ಚರಗೊಂಡು ಒದ್ದಾಡುತ್ತಿದ್ದೇನೆ.

On seeing the bees, which are liberated from lotus by the sharp rays of sun and whose humming sound double my mental pain and on seeing the Lilly flower and on bearing your form in my heart I become unconscious again and again and get awakened by my maids all the day. (once the lotus gets curled, the nectar sipping bees get caught inside. When the sun raises the same

lotus blossoms and the bees come out and lotus experiences separation. When Rukmini sees this, she equates herself to lotus and Krishna to bees and relates the activities of Rukmi etc., to the sharp rays of sun. Or, all the night, in the dreams Krishna is in the hold of the Rukmini's arms. When Sun rises she will be awakened from the dreams Krishna vanishes).

**चन्द्रज्योत्स्नारुचिकुलसमाच्छादिताङ्गी चकोरी**
**हंसाक्रान्ता शरदि गलितोल्लासिनी पद्मिनीव ॥**
**कंसारे त्वत्स्मितसमरुचा त्वद्यशोराशिनेव**
**व्याकीर्णाङ्गी तव विरहतः पाण्डुरा वाहमस्मि ॥२३॥**

**चन्द्रेत्यादि** । चन्द्रस्य ज्योत्स्नाया रुचीनां कुलैः समाच्छादितं अङ्गं यस्यास्सा चकोरी इव । शरदि हंसैः आक्रान्ता । गलितः उल्लासः अस्या अस्तीति तादृशी[१] । पद्मिनी पद्मयुक्तसरसी इव । हे कंसारे कृष्ण ! तव स्मितस्य समा रुक् यस्य तेन । तव यशसः राशिना इव । व्याकीर्णं आक्रान्तं अङ्गं यस्याः सा । तव विरहतः वा । अहं पुण्डुरा अस्मि । पूर्वश्लोके दिवाभवां विरहावस्थां संवर्ण्य रात्रिभवावस्थावर्णनमत्र कृतमिति ध्येयम् । विरहिजनाः रात्रौ हि स्वकान्तोदन्तरतिं तन्मुखमन्दहासचित्रणं च कुर्वन्तीति भावः । विरहजातपाण्डुरत्वं कृष्णयशसः आवरणफलमित्युत्प्रेक्षा । कृष्णयशसः कृष्णत्वाभावः धवलत्वं च स्मितसमरुत्त्वेनेति भावः ॥ अत्र उत्प्रेक्षा-विकल्पसङ्करः अन्त्ये चकोरीवेत्यादावुपमा ।

ಓ ದೊರೆಯೆ ! ಬೆಳದಿಂಗಳ ಬಿಳಿ ಪರದೆಗೆ ಮೈಯೆಲ್ಲ ಹೊದ್ದಿಸಿಕೊಂಡು ಬೆಳ್ಳಗಾದ ಚಕೋರಿಯಂತೆ, ಹಂಸಗಳಿಂದ ತುಂಬಿ ತುಳುಕುವ ಕಮಲ ಸಂಕುಲದಂತೆ, ನಿನ್ನ ಕಿರುನಗೆಯಂತೆ ಬೆಳ್ಳಗಾದ ನಿನ್ನ ಕೀರ್ತಿಮಂಡಲದಿಂದ ಮೈಯೆಲ್ಲಾ ಆವರಿಸಿಕೊಂಡು ಅಥವಾ ನಿನ್ನ ವಿರಹದಿಂದಲೋ ಎಂಬುವಂತೆ ನಾನು ಬಹಳವಾಗಿ ಬಿಳಿಚಿಕೊಂಡಿರುವೆ.

Oh! enemy of Kamsa, like a Chakori bird with its body covered by the moonlight and like a cheerless lake covered by the

---

१. गलितोल्लासिनी इति ॥ 'अत इनि ठनौ' (५-२-११५) इति इनिः ।

swans during autumn (the lake will be cheerful only when the lotus in it blossoms and in the absence of sunrays lotus will not blossom and thus the lake will look cheerless), I am covered by your fame, which is glittering like your smile. Either because of this, or because of your separation I am getting blanched.

**तापं देहे दिनकररुचा जातमामन्यमाना**
**पीयूषांशुप्रसृमरकरोल्लासिवारां विगाहम् ॥**
**मुक्तास्फोटाकलितसिकतोद्धूलनं यत्करोमि**
**त्वद्विश्लेषात्कमपि हृदये प्रज्वलन्तं करोति** ॥२४॥

**तापमिति** । देहे तापं विद्यमानं तापम् । दिनकरस्य सूर्यस्य रुचा प्रभया । जातं सन्तम् । आमन्यमाना अहम् । पीयूषांशोः चन्द्रस्य, प्रसृमरैः करैः विस्तृतकिरणैः, उल्लासिनां वारां जलानाम् । विगाहं स्नानम् । मुक्तानां आस्फोटेन आकलिताः कृताः याः सिकताः तासां उद्धूलनं उत्क्षेपणं च यत् करोमि । तत् । त्वद्विश्लेषात् हृदये । कमपि शब्दागम्यं किमपि वस्तु । विरहाग्निमिति यावत् । प्रज्वलन्तं करोति । रात्रौ चन्द्रोदये सरसि स्नानं मुक्ताचूर्णरूपसिकताप्रक्षेपणं च तापोपशामकं न भवति । अपि तु विरहतापातिशयमेव करोतीति भावः । अत्र आमन्यमानेति भ्रान्तिमान् । एवं विगाह-समर्थकत्वात् काव्यलिङ्गसङ्करश्च । कमपि प्रज्वलन्तमित्यतिशयोक्तिः ।

ಮೈಯ ತಾಪವೆಲ್ಲ ಸೂರ್ಯಕಿರಣದಿಂದ ಉಂಟಾದದ್ದೆಂದು ಭಾವಿಸಿ, ಅಮೃತದಂತೆ ತಂಪಾದ ಬೆಳದಿಂಗಳಿನೊಡನೆ ಬೆರತಿರುವ ಸುಂದರ ಸರೋವರದಲ್ಲಿ ಮುಳುಗುತ್ತೇನೆ. ಮತ್ತೆ ಮುತ್ತಿನ ಮರಳುಗಳನ್ನೆಲ್ಲ ಎರಚಿಕೊಳ್ಳುತ್ತೇನೆ. ಆದರೆ ನಿನ್ನಗಲಿಕೆಯಿಂದ ಇದೆಲ್ಲವೂ ಒಳಗೆ ಏನನ್ನೋ (ವಿರಹಾಗ್ನಿಯನ್ನು) ಮತ್ತಷ್ಟು ಉರಿವಂತೆ ಮಾಡುತ್ತವೆ. ತಾಪ ಹೋಗುವುದೇ ಇಲ್ಲ.

Thinking that, the bodily heat is due to the sun rays, I took bath at a pond which is cheerful because of spreading of the moon-light on it and showered the crystals of the broken pearls on my body. But both these have inflamed something (Kama- fire) in my heart because of the separation from you.

**लावण्यं मे लसति मदनज्वालिना दह्यमानं**
**वज्रत्युद्यच्छिरिषसुमवत् कोमलं कृष्ण चेतः ॥**
**उत्कण्ठार्थं सततमुदिता नासवोऽस्तं भजन्ते**
**वाञ्छा स्त्रीणां खलु बलवती प्रेयसः सङ्गमस्य ॥२५॥**

**लावण्यमिति** । हे कृष्ण ! यद्यपीति शेषः । मे लावण्यं मदनः मन्मथ एव ज्वाली अग्निः तेन । दह्यमानं सत् लसति । अथापि । शिरिषनामककुसुमवत् कोमलं मे चेतः । वज्रति वज्रवत् कठिणत्वेन आचरति । उत्कण्ठार्थं रत्यङ्गबन्धविशेषार्थम् । ''नारी पादौ च हस्तेन धारयेत् गलके पुनः । स्तनार्पितकरः कामी बन्धश्चोत्कण्ठ-संज्ञित'' इति वाचस्पत्योदाहृतः बन्धविशेषः । तदर्थम् । सततं तुदिताः । असवः प्राणाः नरनाड्य इति यावत् । अस्तं न भजन्ते । भज सेवायां लट् । नरनाडीषु मिलना-लिङ्गनाद्युत्साहः लावण्यशुष्कतायामपि समुज्जीवित एव वर्तत इति भावः । तत्कुत इत्यत आह । **वाञ्छेति** । प्रेयसः प्रियतमस्य । सङ्गमस्य मिलनस्य । वाञ्छा स्पृहा । स्त्रीणां बलवती अत्यन्तबलिष्ठा भवति । खलु निश्चयः । पुरुषापेक्षया स्त्रीणां कान्तसङ्गमापेक्षा बलिष्ठेति भावः ॥ अत्र मदनज्वालिनेति रूपकम् । वज्रतीत्युपमा । अन्ते च अर्थान्तर-न्यासः ।

ಕಾಮಾಗ್ನಿಯ ಜ್ವಾಲೆಗೆ ಸಿಕ್ಕು ನನ್ನ ಲಾವಣ್ಯವೆಲ್ಲ ಸುಕ್ಕು ಸುಕ್ಕಾಗಿ ಸುಟ್ಟು ಹೋಗುತ್ತಿದೆ. ಆದರೂ, ಶಿರಿಷ ಹೂವಿನಂತೆ ಬಲು ಕೋಮಲವಾದ ನನ್ನ ಮನಸ್ಸು ನಿನ್ನಲ್ಲೇ ಉತ್ಕಟಿತವಾಗಿ, ವಜ್ರದಂತೆ ಗಡು ಸಾಗುತ್ತಿದೆ. ನಿನ್ನ ತೋಳತೆಕ್ಕೆಗೆ ಸಿಕ್ಕಿಕೊಳ್ಳುವ ಉತ್ಕಟ ಆಸೆಗಾಗಿ ನಿನ್ನಲ್ಲೇ ಮಿಡಿಮಿಡಿವ ನಾಡಿಗಳೆಲ್ಲ ಮುದುಡುವುದೇ ಇಲ್ಲ, ಹೀಗೆ ನಾ ಇನ್ನೂ ಬದುಕಿದ್ದೇನೆಂದರೆ, ಅದು ಸ್ತ್ರೀಯರಿಗೆಲ್ಲ ನಲ್ಲನ ಮಿಲ ನದ ಆಸೆ ಎಷ್ಟು ಗಟ್ಟಿಯಾಗಿರುತ್ತದೆಯೆಂಬುದಕ್ಕೆ ಸಾಕ್ಷಿಯಷ್ಟೆ

Though my beauty looks like burnt by the lust fire, my heart, which is as soft as Sherisha flower (softest flower), is not broken, instead has become as hard as diamond, and the sensory organs of my body which are always vibrating to have you, are not becoming feeble. For women, the desire to associate with the lover is always very powerful.

**खिद्ये कोकैरिव वलयितम्लाननालेन रुष्टैः**
**शय्योन्मर्दक्षमसुमचयामर्षितैश्चञ्चरीकैः ॥**
**कृष्णारावैर्भवनसरसीराजितैरुत्सुकायाः**
**गीतामर्षैरिव मम पिकैर्मर्मवज्राभिघातैः ॥२६॥**

**खिद्य इति** । वलयितेन वलवयवत् वेष्टितेन म्लानेन नालेन । रुष्टैः इव कुपितै-रिव । कोकैः चक्रवाकैः । शय्यायां तल्पे उन्मर्दस्य मदुपवेशादिजातोन्मर्दस्य क्षमाः दक्षाः ये सुमाः तेषां चयेन समूहेन अमर्षितैः क्रुद्धैः इव । विद्यमानैः । चञ्चरीकैः भृङ्गैः । भवने सरस्यां कासारे च राजितैः कृष्ण इति आरावाः शब्दाः तैः । उत्सुकायाः मम । गीतया अमर्षः कोपः येषां तैः इव विद्यमानैः । मर्मणि वज्रस्य अभिघातः यैस्तैः पिकैः कोकिलैः । खिद्ये खेदवती अस्मि । नाले वलयीकृते स्वाहारः वृथा भवतीति कोकः क्रुद्ध्यन् कूजति । सुमानां मर्दने स्वास्वाद्यमधुस्थानं नश्यतीति भृङ्गः कुपित इव गुञ्जति । कदाचित् गृहे वा बहिर्वा कथञ्चित् कृष्ण इति शब्दश्रवणेन उत्साहेन मया गायने समारब्धे सति गायनकुशलाः पिकाः कुपिता इव कूजन्ति । एवं च मया न यत्किञ्चिदपि कर्तुं साध्यत इति दीनास्मीति भावः । विरहिणां विरहेण खेदेऽपि कोकादीनां खेदहेतुत्वेनोत्प्रेक्षेति ज्ञेयम् । अत्र सुमानां स्वोन्मर्दक्षमत्वकथनेन स्वस्याः सुमापेक्षया कोमलत्वं प्रतिपादितं भवति ।

ಕೈಯಿಂದ ಬಿಸತಂತು ಸುತ್ತುತ್ತಿದ್ದರೆ, ಕೋಕಗಳು ಕೆರಳುತ್ತವೆ. ಹಾಸಿಗೆಯಲ್ಲಿ ಹೂ ಒತ್ತಿ ಕುಳಿತರೆ, ದುಂಬಿಗಳಿಗೆ ಸಹನೆ ಆಗುವುದಿಲ್ಲ. ಮನೆಯೊಳಗೆ – ಕೊಳದೊಳಗೆ ಕೇಳಿಬರುವ ಕೃಷ್ಣ ಶಬ್ದಕ್ಕೆ ಉತ್ಸಾಹಗೊಂಡು ಹಾಡಿದರೆ, ಅಸೂಯೆಗೊಂಡು ಕೋಗಿಲೆಗಳೆಲ್ಲ ವಜ್ರದ ಹೊಡೆತದಂತೆ ಮೆದುಳು ಸೀಳುವಂತೆ ಕೂಗುತ್ತವೆ. ಹೀಗೆ ಈ ಹಕ್ಕಿಗಳೆಲ್ಲ ನನ್ನನ್ನು ಬಹಳ ಖೇದಗೊಳಿಸುತ್ತಿವೆ.

When the Chakravaka bird observes me, winding a thread aroung the stalk of lotus, it gets angry. When I sit, the flowers on the bed get compressed, then the bees do not tolerate. On hearing the word Krishna in and around the house, or around the lakes, out of excitement when I sing then the cuckoo birds, becoming furious, hurt me by making harsh sounds. I am getting exhausted because of all these.

अस्तं धैर्यं तम इव मनो दूयते पुण्डरीकं
धारापातो नयनयुगलाच्चन्द्रकान्तादिवापाम् ॥
वर्धन्ते मे श्वसितमरुतो वीचिसङ्घा इवाब्धेः
दीप्ते चन्द्रे हतमिव मनः कृष्ण कोकाङ्गनायाः ॥२७॥

**अस्तमिति** । चन्द्रे दीप्ते सति । कोकाङ्गनाया इव मे मम । धैर्यं अस्तं भवति । पुण्डरीकमिव मनः दूयते परितप्तं भवति । चन्द्रकान्तात् इव तन्नामकशिलाविशेषादिव । नयनयोः युगलात् । अपां जलानाम् । धारायाः प्रवाहस्य पातः भवति । मे श्वसितस्य मरुतः वायवः अब्धेः वीचिसङ्घा इव तरङ्गसमूहवत् । वर्धन्ते । वृधु वर्धने लट् । हे कृष्ण चन्द्रे दीप्ते सति कोकाङ्गनाया कोक्या इव मे मम मनः हतं इव नष्टमिव भवति ॥ अत्र उपमा ।

ಚಂದ್ರೋದಯವಾದರೆ, ಹೆಣ್ಣು ಕೋಕಪಕ್ಷಿಗಾದಂತೆ ನನ್ನ ಧೈರ್ಯವೆಲ್ಲ ಕತ್ತಲೆಯಂತೆ ಕರಗಿಹೋಗುತ್ತದೆ. ಮನಸ್ಸು ಕೆಂದಾವರೆಯಂತೆ ಬಳಲುತ್ತದೆ. ಚಂದ್ರಕಾಂತ ಶಿಲೆಯಿಂದ ನೀರಿಳಿವಂತೆ ಎರಡೂ ಕಂಗಳಿಂದ ಧಾರಾಕಾರವಾಗಿ ನೀರು ಹರಿಯುತ್ತದೆ. ಕಡಲ ಅಲೆಗಳಂತೆ ಉಸಿರಾಟವೆಲ್ಲ ಮತ್ತೂ ಹೆಚ್ಚಾಗಿ ಬೆಳೆಯುತ್ತದೆ. ಎದೆಯಂತೂ ಒಡೆದಂತಾಗುತ್ತದೆ.

Oh! Krishna, As the moon starts glowing, my courage gets melted away like darkness; like the white lotus, my mind becomes sad; Like the Chandrakanta stone, from my eyes water drops flow away; Like the waves of ocean, the air of breathing rises; My heart becomes like broken. All these experiences are common between female Chakravaka bird and me

त्वन्नामा मेऽखिलपरिजनस्त्वन्निबद्धं रहस्यं
त्वत्संयोगोपगमकुशलाश्चिन्त्यमाना उपायाः ॥
त्वद्वार्तानामवगतिपराः कृष्ण सर्वेऽनुयोगाः
स्वप्नाः दिव्यत्वदमलवपुस्सुन्दरत्वैकलीनाः ॥२८॥

**त्वन्नामेति** । हे कृष्ण ! अखिलपरिजनः सर्वः परिवारजनः । मे । तव नाम यस्य सः भवति । सर्वपरिजने मया कृष्ण इति शब्द एव प्रयुज्यत इति भावः । मे रहस्यं

एकान्तस्थानम्। त्वयि निबद्धं निक्षिप्तम्। तत्र त्वद्विचार एव इति भावः। चिन्त्यमानाः उपायाः। तव संयोगस्य सङ्गमस्य उपगमे प्राप्तिविषये कुशला चतुराः सन्ति। त्वत्सङ्गमोपाय एव मनसि सदा भवतीति भावः। सर्वे अनुयोगाः प्रश्नाः। तव वार्तानां अवगतौ ज्ञाने पराः आसक्ताः। मे स्वप्नाः। दिव्यं यत् तव अमलं वपुः तस्य सुदरत्वं सौन्दर्यं तत्रैव लीनाः आसक्ताः सन्ति। एवं रीत्या रुक्मिणी स्वस्याः कृष्णमयतां वर्णयतीति भावः।

ಓ ಕೃಷ್ಣ! ಎಲ್ಲ ದಾಸಿಯರಿಗೂ ನಿನ್ನದೇ ಹೆಸರಾಗಿ ಬಿಟ್ಟಿದೆ. ಏಕಾಂತವೆಲ್ಲ ನಿನ್ನೊಡನೇ ನಡೆಯುತ್ತಿದೆ. ಆಲೋಚಿಸುವ ಉಪಾಯಗಳೆಲ್ಲ ನಿನ್ನ ಮಿಲನ ಗಳಿಸಲು ಹೇಗೆ ಚತುರವೆಂಬುದಾಗಿಯೇ ಸಾಗುತ್ತಿದೆ. ಮತ್ತೆ ನಾ ಕೇಳುವ ಎಲ್ಲ ಪ್ರಶ್ನೆಗಳೂ ನಿನ್ನ ಸುದ್ದಿಯನ್ನು ತಿಳಿಯುವುದಕ್ಕಾಗಿಯೇ ಮೀಸಲಾಗಿವೆ. ನನ್ನ ಕನಸುಗಳಂತು ನಿನ್ನ ನಿರ್ಮಲ ಮೈ ಚೆಲುವಿನಲ್ಲೇ ಮುಳುಗಿಹೋಗಿವೆ.

Oh! Krishna, I am calling all my surrounding people only by your name. All my privacy is dedicated only to you. The plans whatever I think are only meant for meeting you. All my efforts are being used only in getting your news. All my dreams are completely engrossed in the beauty of your body.

**केशैर्मालां कुसुमकलितां कृष्ण धर्तुं विखिद्ये**
**वोढुं गात्रे मलयजरजो न क्षमेवाद्रिखण्डम्॥**
**दीपस्यापि प्रसृमरशिखां वीक्षितुं नास्मि शक्ता**
**ज्वालामालाः कथमिह सहे विप्रयोगानलस्य ॥२९॥**

**केशैरिति**। हे कृष्ण। कुसुमैः कलितां रचिताम्। मालाम्। केशैः धर्तुं विखिद्यै। वि उपसर्गः खिद दैन्ये लट्। गात्रे शरीरे। अद्रिखण्डं इव शिलां इव। मलयजस्य गन्धविशेषस्य रजः। वोढुं धर्तुम्। न क्षमा न समर्थास्मि। दीपस्य प्रसृमरां विस्तृतां शिखामपि। वीक्षितुं न शक्तास्मि। एवं कुसुममालाधारणे, गन्धधारणे, दीपप्रभा-दर्शनेऽपि असमर्था अहम्। विप्रयोगानलस्य विरहाग्नेः। ज्वालामालां कथं इह सहे सोढुं प्रभवामि। न कथमपीत्यर्थः। अत्र विप्रयोगानलज्वालासहनासामर्थ्यं समर्थितं पूर्वपाद-त्रयेणेति काव्यलिङ्गम्। तत्र दीपस्यापीत्यपिना काव्यार्थापत्तिर्गम्या च वर्तते।

ಓ ಕೃಷ್ಣ! ಹೂ ಹಾರಗಳನ್ನು ತುರುಬಿನಲ್ಲಿ ಮುಡಿಯಲು ಬಳಲುತ್ತಿದ್ದೇನೆ. ಮೈ ಮೇಲೆ ಶ್ರೀಗಂಧ ಲೇಪವಂತೂ ಬೆಟ್ಟದಂತೆ ಸಹಿಸಲಸಾಧ್ಯವಾಗಿದೆ. ಪುಟ್ಟ ದೀಪದ ಬೆಳಕನ್ನೂ ಕೂಡ ಕಾಣಲು ಕಣ್ಣು ಅಶಕ್ತವಾಗಿದೆ. ಇನ್ನೂ ನಿನ್ನ ವಿರಹಾಗ್ನಿಯ ಜ್ವಾಲೆಗಳನ್ನು ಹೇಗೆ ತಾಳಿಕೊಳ್ಳುವೆ.

I am struggling to wear, the garland of flower on my hair; I am unable to bear the weight of the sandal paste on my body as if it is a piece of mountain. And when I am unable to see the light spread by the lamp itself, how will I be able to tolerate the flames of separation-fire

**उद्धूता स्यादिति तनुलता वीज्यते नाब्जपत्रैः**
**स्फोटं यायादिति मलयजैर्लिप्यते नैव गन्धैः ॥**
**आस्तीर्यन्ते विदलनभिया नोरसः पल्लवानि**
**प्रेमोन्मादः कथमिह भजेत् शान्तिमाधिर्ममैषः ॥३०॥**

**उद्धूतमिति** । तनुरेव तला तनुलता। उद्धूता उत्पतिता। स्यात् इति इत्याशङ्क्य । अब्जपत्रैः न वीज्यते । वीज व्यजने कर्मणि लट् । स्फोटं यायात् प्राप्नुयात् इति आशङ्क्य । तनुलता मलयजैः गन्धैः । न लिप्यते । लिप उपदेहे कर्मणि लट् । उरसः वक्षस्थलस्य । विदलनभिया पल्लवानि किसलयानि । ''पल्लवोऽस्त्री किसलयम्'' इत्यमरः । न आस्तीर्यन्ते न प्रसार्यन्ते । आङुपसर्गः स्तृञ् आच्छादने कर्मणि लट् । एषः मम आधिः व्यथा । प्रेम्णः उन्मादः । इह कथं शान्तिं भजेत् प्राप्नुयात् । विरहिणः स्वप्रियप्राप्तिं विना न किञ्चिदपेक्षितमिति गन्धालङ्कारादित्यागः स्वतः भवति । तत्र उद्धूतत्वादीनां हेतुत्वेनोत्प्रेक्षेति भावः । अत्र उत्प्रेक्षा ।

ಕಮಲಪತ್ರಗಳಿಂದ ಗಾಳಿ ಬೀಸಿದರೆ ನನ್ನ ಮೈಬಳ್ಳಿ ಹಾರಿ ಹೋದೀತೆಂದು ಹೆದರಿ ಬೀಸುವುದನ್ನು ತಡೆ ಹಿಡಿದ್ದಿದ್ದೇನೆ. ಮೈ ಒಡೆದು ಹೋದೀತೆಂದು ಮಲಯಾಚಲದ ಚಂದನದ ಲೇಪ ಮಾಡುತ್ತಿಲ್ಲ. ಹೃದಯ ಸೀಳೀತೆಂದು ಎದೆ ತುಂಬ ಹೂದಳಗಳನ್ನು ಹರವಿಕೊಂಡಿಲ್ಲ. ಓ ದೊರೆಯೇ! ನನ್ನ ಈ ಪ್ರೇಮದ ಹುಚ್ಚು ವೇದನೆಯು ಹೇಗೆ ಕಡಿಮೆಯಾದೀತು ? ಹೇಳು.

With the fear that my body may get flown away, I am not fanning myself with the fan made of lotus leaves. With the fear of explosion I am not smearing sandal paste on my body. With the

fear of splitting I am not spreading sprout leaves on my bosom. Oh! Krishna, how will my misery due to this kind of love-madness get cured?

**नागाधीशः सततवसुधाभारखेदार्तमूर्धा**
**भक्ष्यः किञ्चाम्बरचरपतेः वायुना जीवितव्यः ॥**
**नित्यं वक्त्रोद्वलितगरलो रक्तनेत्रो द्विजिह्वः**
**सीमन्तिन्या परिगद कया वाञ्छया सेवितव्यः ॥३१॥**

एतावत्पर्यन्तं स्वविरहावस्थां संवर्ण्य अधुना स्वस्याः कृष्णं विहायान्यः पतिर्न भवितुं युक्त इति सकारणं प्रतिपादयति **नागाधीश इत्यादिभिः षड्भिः पद्यैः** । तत्र प्रथमतः शेषः स्वानपेक्षित इति निरूपयितुं तद्वर्णनं करोति । **नागाधीश इति** । नागानां अधीशः शेषः । सततं वसुधायाः पृथ्व्याः भारेण खेदार्तः मूर्धा मस्तकः यस्य तादृशः अस्ति । किञ्च अम्बरे चराणां पक्षिणां पतिः गरुडः तस्य । भक्ष्यः भक्षणार्हः अस्ति । वायुना जीवितव्यः अस्ति । नित्यं वक्त्रेण उद्वलितं उद्वान्तं गरलं विषम् येन तादृशः । रक्ते नेत्रे यस्य सः । द्वे जिह्वे यस्य सः । अस्ति । हे कृष्ण ! तादृशः नागाधीशः । सीमन्तिन्या स्त्रिया । कया वाञ्छया कीदृशापेक्षया । सेवितव्यः पतित्वेन भजनीयः ? परिगद प्रश्नस्योत्तरं वद । यः ऋणादिबहुभारार्तः अल्पायुष्यः, निरन्नः, दुर्मुखः, कुपितः, अनृतभाषी स पुरुषः वरत्वेन लोके न स्वीक्रियते । शेषश्च तथा वर्तत इति भावः ॥ अत्र वरत्वेनास्वीकरणे कारणानां ऋणादिभारार्तत्वादीनां व्यङ्ग्यत्वेन परिकरः ।

ಇಲ್ಲಿಂದ ಮುಂದೆ, ಕೃಷ್ಣನನ್ನು ಹೊರತು ಬೇರೆ ಯಾರೂ ತನಗೆ ವರ ಆಗಲು ಸಾಧ್ಯವಿಲ್ಲವೆಂದು ರುಕ್ಮಿಣಿಯು ನಿರೂಪಿಸುತ್ತಿದ್ದಾಳೆ.

ಸರ್ಪರಾಜನು (ಶೇಷನು) ನಿತ್ಯವೂ ಭೂಭಾರ ಹೊತ್ತು ತಲೆಭಾರಕ್ಕೆ ಈಡಾಗಿದ್ದಾನೆ. ಇದಲ್ಲದೆ, ಪಕ್ಷಿರಾಜನಾದ ಗರುಡನಿಗೆ ಭಕ್ಷ್ಯವೆಂದೆನಿಸಿದ್ದಾನೆ. ಕೇವಲ ಗಾಳಿ ಕುಡಿದು ಬದುಕಿದ್ದಾನೆ. ಯಾವಾಗಲೂ ಬಾಯಿಂದ ವಿಷದ ಜೊಲ್ಲು ಸುರಿಸುತ್ತಾನೆ. ಕೆಂಗಣ್ಣನವ. ಎರಡು ನಾಲಿಗೆಯವ. ಸುಂದರಳಾದ ಕನ್ಯೆ, ಯಾವ ಆಸೆಗಾಗಿ ಅವನನ್ನು ವರಿಸಬೇಕು ? ಹೇಳು.

Now Rukmini begins to explain why she cannot accept persons other than Krishna as her bridegroom. The king of ser-

pents Shesha is having heavily tired head due to the bearing of the earth all the time. He himself is the food for Garuda, the king of all eagles; He is living only by consuming air alone; He always vomits venom: he is bloody eyed and two tongued; Oh! Krishna, please tell me for what desire a woman can accept such a person?

**नाकाधीशः परमृगदृगास्फालनोद्युक्तचेताः**
**गात्रोत्सर्पद्भगविकलितो जीयमानोऽसुरेन्द्रैः ॥**
**नित्यामर्षी तपति सुजने कन्यया शीलहृद्ये**
**क्षात्रे वंशे कलितजनुषा कृष्ण नाभ्यर्थनीयः ॥३२॥**

इन्द्रस्य त्यागे बीजं वर्णयति । **नाकाधीश इति** । नाकस्य स्वर्गस्य अधीशः इन्द्रः। परेषां मृगदृशां अहल्यादीनां घर्षणे उद्युक्तं चेतः यस्य तादृशः अस्ति । गात्रे उत्सर्पता व्याप्तेन भगेन रोगेण विकलितः ऊनाङ्गः अस्ति । असुरेन्द्रैः बल्यादिभिः जीयमानः पराजयग्रस्तः अस्तिः । तपति तपोनिरते । सुजने । नित्यं अमर्षी असूयाग्रस्तः अस्ति । हे कृष्ण ! शीलेन सत्स्वभावेन हृद्ये मनोहरे । क्षात्रे वंशे कलितं जनुः यया तया । कन्यया । तादृशः नाकाधीशः न अभ्यर्थनीयः वरत्वेन न प्रार्थनीयः किल । परनारीकामुकः रोगी दुर्बलः असूयादिदोषग्रस्तः वरत्वेन न हि कन्यया स्वीक्रियत इति भावः । अत्र इन्द्रस्यास्वीकारे कारणानां कामुकत्वादिदोषाणां व्यङ्ग्यत्वेन परिकरः ।

ಸ್ವರ್ಗದ ಅರಸನಂತೂ (ಇಂದ್ರ) ಪರಸ್ತ್ರೀಯರನ್ನು ಕೆಡಿಸುವುದರಲ್ಲೇ ಸದಾ ಮುಳುಗಿರುತ್ತಾನೆ. ಮೈಗೆಲ್ಲ ರೋಗಹರಡಿಸಿಕೊಂಡು ಅಸಹ್ಯವಾಗಿದ್ದಾನೆ. ಅಸುರರಿಗೆ ಅನೇಕ ಬಾರಿ ಸೋತು ಸುಣ್ಣಾಗಿದ್ದಾನೆ. ಇದಲ್ಲದೆ, ತಪಸ್ಸು ಮಾಡುವ ಸಜ್ಜನರ ಮೇಲೆ ಸದಾ ಅಸೂಯೆ ಪಡುತ್ತಾನೆ. ಓ ಕೃಷ್ಣ ! ಶ್ರೇಷ್ಠ ಶೀಲವಂತ ಕ್ಷತ್ರಿಯರ ವಂಶದಲ್ಲಿ ಹುಟ್ಟಿದ ಯಾವ ಕನ್ಯೆಯೂ ಈ ಇಂದ್ರನನ್ನು ವರಿಸಲಾರಳಷ್ಟೆ

Indra, the king of heaven has his interest in spoiling other ladies; his body got decayed due to the spreading of a decease; gets defeated by demons frequently; always envy the penancing ascetics. Oh! Krishna, such a person cannot be accepted as a

bridegroom by a girl who has taken birth in a royal family which is well known for good characters.

गाढाश्लिष्टः शिखरिसुतया योऽर्धनारीशरीरः
भूताक्रान्तः पितृवनगृहः कामदाहे प्रवीणः ॥
कोपी भस्मोद्धिकलितवपुः प्रेतमूर्धास्थिमालः
तं का बाला कृतशुभरुचिः कृष्ण शम्भुं वृणीते ॥३३॥

रुद्रतिरस्कारे कारणं निरूपयति । **गाढाश्लिष्ट इति** । यः । शिखरी पर्वतः हिमालयः । तस्य सुतया पार्वत्या । गाढं आश्लिष्टः आलिङ्गितः । अत एव, अर्धं नार्याः शरीरं यस्य तादृशः अस्ति । भूतैः आक्रान्तः संवलितः । पितृवनं श्मशानं एव गृहं यस्य सः । ''श्मशानं स्यात् पितृवनम् ।'' इत्यभिधानम् । कामदाहे कामस्य भस्मीकरणे । प्रवीणः समर्थः । कोपी कोपवान् । भस्मना उद्धिकलितं सल्लेपितं वपुः यस्य तादृशः । प्रेतानां मृतानां मूर्ध्नाः अस्थीनि तेषां माला यस्य सः अस्ति । हे कृष्ण ! तं तादृशं शम्भुं रुद्रम् । कृता शुभा समीचीना अभिरुचिः यया सा । का बाला । वृणीते वरणं करोति । वृञ् वरणे लट् । न कापि तादृशं पुरुषं वृणोतीत्यर्थः । अर्धपुंस्त्ववान्, भूतादिरूपक्रूरपरिवारयुतः, समीचीनगृहशून्यः, कामस्य दाहकः, कोपिष्ठः, भस्मादिना अशुचिः पुरुषः वरो न भवतीति भावः । अत्र अत्रापि पूर्ववत् परिकरः ।

ಶಿವನಂತು, ಪಾರ್ವತಿಯಿಂದ ಬಿಗಿಯಾಗಿ ಅಪ್ಪಿಕೊಂಡು ಮೈಯಲ್ಲಿ ಅರ್ಧಭಾಗ ಹೆಣ್ಣೇ ಆಗಿದ್ದಾನೆ. ಸದಾ ಭೂತ-ಪ್ರೇತಗಳಿಂದ ಸುತ್ತೂರಿದ್ದಿದ್ದಾನೆ. ಸ್ಮಶಾನವಾಸಿ. ಕಾಮನನ್ನು ಸುಡುವುದರಲ್ಲೇ ಚತುರ. ಸಿಡುಕ, ಮೈಗೆಲ್ಲ ಬೂದಿ ಬಳಿದುಕೊಂಡು ರುಂಡ ಮಾಲೆ ಹಾಕಿಕೊಂಡಿದ್ದಾನೆ. ಓ ಕೃಷ್ಣ! ಸುಂದರ ಆಸೆಯುಳ್ಳ ಯಾವ, ಹುಡುಗಿ ಆ ಶಿವನನ್ನು ವರಿಸುತ್ತಾಳೆ ?

Another person is tightly embraced by the daughter of the king of mountains. Therefore, half of his body has become feminine. He is surrounded by a number of ghosts. He always lives in a graveyard. He is good at only burning the desires (Kama). He is short tempered. Apart from these, he smears ashes on his entire body and bears the garland of skulls and bones. Oh! Krishna, Which woman, with good taste wishes to have such a person as Shiva as her bridegroom?

ब्रह्मा नित्यं मुनिजनमुखादात्मपुत्रीरतात्मा
प्रत्यापन्नः पितृपितृपदं प्राणिनां श्रूयते यत् ॥
तन्नो युक्तः पशुसमदृशा तातपित्रा विवाहः
जानन्त्येवं सरसिजभुवः सन्निधानं न याचे ॥३४॥

चतुर्मुखं तिरस्कर्तुं कारणं वर्णयति । **ब्रह्मेति** । यत् यतः । ब्रह्मा चतुर्मुखः । आत्मनः पुत्र्यां रतः आत्मा मनः यस्य तादृशः इति । प्राणिनां सकलजन्तूनाम् । पितृपितृपदं पितामहस्थानम् । प्रत्यापन्नः प्राप्त इति च । नित्यं मुनिजनानां मुखात् । श्रूयते । श्रु श्रवणे कर्मणि लट् । तत् तस्मात् । पशोः समा दृक् यस्य तेन । तातपित्रा पितामहेन च । साकम् । विवाहः । नो युक्तः । इत्येवं जानती अहम् । सरसिजभुवः ब्रह्मणः । सन्निधानं सामीप्यम् । न याचे । टु याचृ याञ्चायां लट् । पशुसदृशेन पितृसदृशेन च विवाहो न युक्त इति ब्रह्मतिरस्कारः । तत्र ब्रह्मा आत्मपुत्रीरतात्मा श्रूयते न तु तथैवास्तीति भावः व्यज्यते श्रूयत इति पदग्रहणेन ।

ಬ್ರಹ್ಮದೇವರಂತು, ತನ್ನ ಮಗಳಲ್ಲೇ ಮನಸ್ಸಿಟ್ಟಿದ್ದನೆಂದು ಕೇಳುತ್ತಿದ್ದೇನೆ. ಇದಲ್ಲದೆ, ಅವನು ಎಲ್ಲ ಜೀವಿಗಳಿಗೆ ಪಿತಾಮಹನೆಂಬ ಸ್ಥಾನದಲ್ಲಿ ಇರುವನಂತೆ. ಇದೆಲ್ಲ ಮುನಿಜನರು ಆಡಿಕೊಳ್ಳುವ ಮಾತು. ಇದನ್ನು ಕೇಳಿದಾಗ, ತನ್ನ ಮಗಳನ್ನೇ ಹಿಡಿಯುವ ಪಶುವಿನಂತಿರುವ ಅಥವಾ ಪಿತಾಮಹಸ್ಥಾನದಲ್ಲಿರುವ ಆ ಬ್ರಹ್ಮನೊಡನೆ ಮದುವೆ ಸಮಂಜಸವಲ್ಲವೆಂದು ತಿಳಿದು ಎಂದಿಗೂ ನಾ ಅವನನ್ನು ಬೇಡುತ್ತಿಲ್ಲ.

Brahma, as heard from sages, had desire for his own daughter and is in a position of grandfather for all the living beings. Therefore, it is not right to marry such a person who behaved like an animal and also in the position of a grandfather. Oh! Krishna, knowing all these facts, I do not pray for his association.

अन्ये देवा दितितनुभवैः पीड्यमाना नितान्तं
रक्षां कर्तुं परिमितबलाः स्वात्मनो न क्षमन्ते ॥
तेषां पाणिं कथय कलये केन कामेन येषां
भूयः सर्गो भुवि विरचितस्स्वोत्तमेष्वागसो हि ॥३५॥

इतरदेवतातिरस्कारबीजं वक्ति । **अन्य इति** । अन्ये इन्द्ररुद्रशेषब्रह्मभ्यः भिन्नाः । देवाः । दितितनुभवैः दितिपुत्रैः । नितान्तं पीड्यमानाः । सन्ति इति शेषः । ते परिमितबलाः सन्तः । स्वात्मनः रक्षां कर्तुं न क्षमन्ते । स्वोत्तमेषु स्वोत्तमाधिकारि-विषये विरचितात् कृतात् । आगसः अपराधात् । 'आगोऽपराधो मन्तुश्च' इत्यमरः । येषां भुवि भूयः पुनः पुनः । सर्गः सृष्टिः । हि प्रसिद्धः । तेषां तादृशानां देवानाम् । पाणिं केन कामेन । कलये स्वीकुर्वे ? हे कृष्ण ! कथय । स्वाश्रितपत्नीरक्षकश्चेत् तस्य पतित्वं युक्तम् । तच्च देवानां नेति भावः । एवं पतितानां च न पतित्वं युक्तमिति भावः । अत्र काव्यलिङ्गम् ।

ಬೇರೆ ದೇವತೆಗಳಂತೂ ದೈತ್ಯರ ಪೀಡೆಗೆ ಬಹಳವಾಗಿ ತುತ್ತಾಗಿದ್ದಾರೆ. ತಮ್ಮನ್ನೇ ತಾವು ರಕ್ಷಿಸಿಕೊಳ್ಳಲಾಗದಷ್ಟು ದುರ್ಬಲರಾಗಿದ್ದಾರೆ. ಇದಲ್ಲದೆ ಬಾರಿ ಬಾರಿ ಸ್ವೋತ್ತಮರಿಗೆ ಅಪಚಾರವೆಸಗಿ ಭೂತಲಕ್ಕೆ ಬಂದು ಬೀಳುತ್ತಿದ್ದಾರೆ. ಓ ಕೃಷ್ಣ ! ಹೇಳು – ಯಾವ ಆಸೆಗಾಗಿ ನಾನು ಆ ದೇವತೆಗಳ ಕೈ ಹಿಡಿಯಬೇಕು ?

Other Devas, always being tortured by demons, are unable to protect themselves as they have limited strength. Oh! Krishna, with what desire should I hold the hands of such Devas who take birth again and again on the earth by committing sins against their own superiors?

**रक्षः प्रेताः नृपकुलभवा दानवाः किं न्वपेक्ष्याः**
**कामिन्या किं पितृजनसमं मौनिवृन्दं हि काम्यम् ॥**
**देवानां स्यात्कुगतिरियती का गतिर्मानुषाणां**
**राज्ञामेवं कलितहृदया त्वां प्रपन्नाहमस्मि ॥३६॥**

देवतेतरराक्षसमानुषादितिरस्कारं कैमुत्यन्यायेन निरूपयति । **रक्षः इति** । रक्षः राक्षसवर्गः । प्रेताः । नृपकुले रावजंशे भवाः जाताः दानवाः । किं नु किमिति । अपेक्ष्याः अपेक्षार्हाः ? पितृजनसमं मौनिनां वृन्दं कामिन्या काम्यं किम् ? देवानां अपि इयती ईदृशी पूर्वोक्ता । कुगतिः दुरवस्था । चेत् इति शेषः । मानुषाणां राज्ञां गतिः का इति कलितं विचारितं हृदयं यस्याः सा सती । अहं त्वां प्रपन्ना शरणागता अस्मि । एवं

रीत्या कृष्णं विहाय अन्ये सर्वेऽपि दोषिण इति निरूपितं भवति । यद्यपि एतत्सर्वं लक्ष्मीस्वयंवरे साक्षादभिहितम् । तथापि तन्निबन्धनमत्र पत्र इति ज्ञेयम् । एतेन रुक्मिण्याः कृष्णप्रार्थना न कामिन्याः कामपूरणमात्रोद्देशरूपेति ज्ञायते । अत्र पितृजनसममिति परिकरः ।

ಇನ್ನು ಈ ಕಾಮಿನಿಯು, ರಾಕ್ಷಸರನ್ನು ಭೂತಪ್ರೇತಗಳನ್ನು ರಾಜರ ವೇಷದಲ್ಲಿರುವ ದಾನವರನ್ನು ಬಯಸುವುದು ಸರಿಯಾದೀತೆ ? ಪಿತೃಸಮಾನರಾದ ಮುನಿವೃಂದವನ್ನು ವರಿಸಬೇಕೇ ? ದೇವತೆಗಳಿಗೇ ಇಂಥ ಹೀನಾಯ ಸ್ಥಿತಿಯಿದ್ದಾಗ ಮಾನವರಾದ ಇತರ ರಾಜರ ಬಗ್ಗೆ ಹೇಳುವುದೇನಿದೆ ? ಓ ಕೃಷ್ಣ ಹೀಗೆಲ್ಲ ಆಲೋಚಿಸಿ ನಾನೀಗ ನಿನಗೆ ಶರಣಾಗಿದ್ದೇನೆ.

Should the Rakshasas or the ghosts and the demons who took birth in other royal races be acceptable to a woman? Should be sages who are equal to father, be desired by a girl? Oh! Krishna, when the state of Devas itself is so bad, what to say about the state of human kings? After thinking all these I surrender only to you.

**दोषातीतैः शुभगुणगणैरच्युतं सर्वकाले**
**वेदाः सर्वे श्रितसुरतरुं सानुकम्पस्वभावम् ॥**
**गायन्ति त्वामितरदखिलं प्रच्युतं सर्वथा तत्**
**त्वय्येवाहं विरचितरुचिः कृष्ण कामाय याचे** ॥३७॥

एवं सर्वान् तिरस्कृत्य श्रीकृष्णाश्रयणे, तत्रापि दोषदर्शने घट्टकुट्टीप्राभातन्यायापात इत्याशङ्कायां श्रीकृष्णस्वरूपं वर्णयति । **दोषतीतैरिति** । दोषान् अतीताः तैः । शुभाः मङ्गलकरा गुणास्तेषां गणैः । सर्वकाले । अच्युतं च्युतिहीनं पूर्णमिति यावत् । श्रितानां आश्रितानां सुरतरुं कल्पवृक्षं सन्तम् । अनुकम्पः कृपा तेन सहितः स्वभावः यस्य तादृशम् । इति । त्वाम् । सर्वे वेदाः गायन्ति । इतरत् अखिलं सर्वथा सर्वात्मना प्रच्युतं इति च गायन्ति वर्णयन्ति । गै शब्दे लट् । तत् तस्मात् । कृष्ण ! अहं त्वयि एव विरचिता अभिरुचिः यस्यास्सा सती । कामाय याचे । तथा च कृष्णयाञ्चा युक्तेति भावः ॥

ಸಕಲ ವೇದಗಳು ನಿನ್ನಲ್ಲಿ ಒಂದೂ ದೋಷವಿಲ್ಲವೆಂದು ನೀನೊಬ್ಬನೆ ಸಕಲ ಗುಣಗಳಿಂದ ಸಂಪೂರ್ಣನೆಂದು, ಆಶ್ರಿತ ಜನರಿಗೆ ಕಲ್ಪವೃಕ್ಷವೆಂದು, ಅನುಕಂಪ ಬೀರುವ ಸ್ವಭಾವದವನೆಂದು ಸಾರುತ್ತಿವೆ. ಇದಲ್ಲದೆ, ಬೇರೆ ಎಲ್ಲವೂ ಎಲ್ಲ ರೀತಿಯಿಂದಲೂ ಕುಂದುಕೊರತೆಯನ್ನೂ ಹೊಂದಿರುವುದೆಂದೇ ತಿಳಿಸುತ್ತಿವೆ. ಆದ್ದರಿಂದ ಓ ಕೃಷ್ಣ ! ನಾನೀಗ ನಿನ್ನಲ್ಲೇ ಮನಸ್ಸಿಟ್ಟು ಆಸೆ ಈಡೇರಿಸೆಂದು ಬೇಡುತ್ತಿದ್ದೇನೆ.

All Vedas are praising you as the only one, without any deficiency of unblemished good qualities at all times; and you are the Kalpavriksha (wish-yielding tree) for those who come to your refuge; and you are the only one to have merciful nature. Vedas also proclaim that all the other things are deficient in nature in all the ways. Oh! Krishna, therefore, I am interested only in you and praying for the fulfillment of my desire.

**न क्रीडायां कुतुकि हृदयं नैव भूषाविताने**
**नाहारे वादरकृतभरं नो विनोदे निबद्धम् ॥**
**त्वत्पादाब्जं हृदि निदधती सर्वदा सर्वदेशे**
**त्वां ध्यायन्ती विषयविमुखा योगिनीवास्मि नित्यम्** ॥३८॥

इतः श्लोकपञ्चकेन पुनः स्वविरहावस्थां, कृष्णानुग्रहालाभे वक्तव्यं च स्वमनोगतं व्यनक्ति । **न क्रीडायामिति** । हे कृष्ण ! ममेति शेषः । हृदयम् । क्रीडायां कुतुकि कुतूहलयुतं । न नास्ति । ''कुतुकं च कुतूहलं'' इत्यमरः । भूषाणां अलङ्काराणां विताने करणे । न कुतुकि । आहारे भोजने । आदरेण कृतः भरः निर्भरः यस्य तत् न । विनोदे हास्ये । न निबद्धम् । सर्वदा सर्वदेशे । तव पादः अब्जमिव तत् । हृदि निदधती । त्वां ध्यायन्ती सती । विषयेषु विमुखा अनासक्ता सती । योगिनी इव नित्यं अस्मि । योगिनां भगवान् प्रसन्नो भवतीति अहमपि तथैवास्मीति निरूपितमिति ध्येयम् । अत्र उपमाकाव्यलिङ्गसङ्करः ।

ಓ ಕೃಷ್ಣ ! ನನ್ನ ಮನಸ್ಸಿಗೆ ಆಟದಲ್ಲಿ ಆಸಕ್ತಿಯಿಲ್ಲ, ಅಲಂಕಾರ ಮಾಡಿಕೊಳ್ಳಲು ಉತ್ಸಾಹವಿಲ್ಲ, ಊಟ ಮಾಡಲು ಆಸ್ಥೆಯಿಲ್ಲ, ಹಾಸ್ಯವಂತೂ ಹಿಡಿಸೋದೇ ಇಲ್ಲ, ಯಾವಾಗಲೂ ಎಲ್ಲ ಕಡೆಗೂ

ನಿನ್ನ ಪಾದ ಕಮಲವನ್ನೇ ಧ್ಯಾನಮಾಡುತ್ತ (ತಿನ್ನುವ-ಉಣ್ಣುವ) ವಿಷಯಗಳ ಬಗ್ಗೆ ಲಕ್ಷ್ಯಗೊಡದೆ ಯೋಗಿಯಂತೆ ಆಗಿದ್ದೇನೆ.

Now Rukmini explains again about her state;
My heart is not showing any interest in playing and in adoring myself. My heart does not have any enthusiasm in taking food and not interested in amusement. Oh! Krishna, bearing your lotus feet in my heart at all times and everywhere, meditating only about you and refusing mundane pleasures, I am like a saint.

**कामं शत्रुं हृदयजनितं तस्य मित्रं हिमांशुं**
**याचे नाहं किमपि निभृतं मत्परित्रासदीक्षम् ॥**
**याचे शत्रुं पवनमपि मे कामदग्धान्तरायाः**
**आशायां त्वं विकिर भसितं द्वारकेशस्य चेति** ॥३९॥

**काममिति** । अहं हृदयजनितं शत्रुं कामं, तस्य निभृतं विनीतम् । ''निभृत-विनीतप्रश्रिताः समा'' इत्यमरः । मित्रं । मम परित्रासे दक्षं । हिमांशुं चन्द्रं च । अहं किमपि न याचे । कामेन दग्धं अन्तरं मनः यस्यास्तस्याः मे भसितं भस्म । ''भूति-र्भसितभस्मनी''त्यमरः । द्वारकेशस्य कृष्णस्य । आशायां दिशि । विकिर प्रक्षिप । कृ विक्षेपे लोट् । इति । शत्रुं अपि पवनं याचे । त्वदनुग्रहालाभेऽहं न जीवामीति भावः । अत्र विषमानुज्ञासङ्करः ।

ಎನ್ನ ಮನದೊಳಗೆ ಹುಟ್ಟಿ ಎನಗೇ ಶತ್ರುವಾದ ಕಾಮನನ್ನಾಗಲಿ, ಅವನಿಗೆ ವಿಧೇಯನಾಗಿ ಪ್ರಿಯ ಗೆಳೆಯನಾದ ಆದ್ದರಿಂದಲೇ ನನ್ನನ್ನು ನೋಯಿಸಲು ಮುಂದಾಗಿರುವ ಈ ಚಂದಿರನನ್ನಾಗಲಿ ನಾ ಏನೊಂದನ್ನೂ ಬೇಡುತ್ತಿಲ್ಲ. ಆದರೆ, ಆ ಕಾಮನಿಗೆ ಗೆಳೆಯನಾಗಿ ನನಗೆ ಶತ್ರುವಾದರೂ ಕೂಡ ಈ ತಂಗಾಳಿಯನ್ನು ಅಂಗಲಾಚಿ ಬೇಡಿಕೊಳ್ಳುತ್ತೇನೆ. ಕಾಮಾಗ್ನಿಯಿಂದ ಸುಟ್ಟುಹೋದ ನನ್ನ ಬೂದಿಯನ್ನಾದರೂ ಆ ದ್ವಾರಕೆಯ ದಿಕ್ಕಿಗೆ ಹರವಿ ಹಾಕು ಎಂದು ಕೇಳಿಕೊಳ್ಳುತ್ತೇನೆ.

I will not request for anything either with my enemy Kama who has taken birth in my heart or with his obedient friend Moon. But with the wind, inspite of being my enemy and bent

upon to trouble me .I request to spread the ashes of my heart burnt by Kamafire, in the direction of the king of Dwaraka.

शान्तं कर्तुं तव विरहजं दीप्तकामाग्निमुग्रं
यस्यैकोऽलं पृषदिति मुहुः कृष्ण चेतस्यकार्षम् ॥
नैको लेशो मनसि कृतया चिन्तयाप्यङ्ग लब्धः
पीतः केनागणितकरुणादुग्धपाथोनिधिस्ते ॥४०॥

**शान्तमिति** । हे कृष्ण ! तव विरहजम् । उग्रं भयङ्करम् । दीप्तः प्रज्वलितः काम एव अग्निस्तम् । शान्तं कर्तुम् । यस्य यादृशसागरस्य । एकः पृषत् बिन्दुः । अलं कार्यक्षम इति । मुहुः चेतसि अकार्षं चिन्तामकरवम् । तस्य सागरस्य एकः अपि लेशः मनसि कृतया चिन्तया न लब्धः । हे अङ्ग ! ते । अगणितकरुणा एव दुग्धस्य पाथोनिधिः समुद्रः । केन पीतः? अत्र कामाग्निकरुणादुधपाथोनिधिरिति रूपकम् ।

ಓ ಕೃಷ್ಣ! ನಿನ್ನ ವಿರಹದಿಂದ ಉರಿ ಹತ್ತಿದ ಈ ಘೋರ ಕಾಮಾಗ್ನಿಯನ್ನು ಆರಿಸಲು, ನಿನ್ನ ಕರುಣಾಸಾಗರದ ಒಂದೇ ಒಂದು ಬಿಂದು ಸಿಕ್ಕರೂ ಸಾಕೆಂದು ಮನದೊಳಗೇ ಅಂದುಕೊಂಡಿದ್ದೆ. ಆದರೆ ಎಷ್ಟು ಚಿಂತೆಗೈದರೂ ನನಗೆ ಅದರ ಒಂದು ಹನಿಯೂ ಕೂಡ ದೊರೆಯಲಿಲ್ಲ. ಓ ದೇವ ! ನಿನ್ನ ಅಪಾರವಾದ ಕರುಣೆಯ ಪಾಲ್ಗಡಲನ್ನು ಯಾರಾದರೂ ಅಷ್ಟೂ ಕುಡಿದುಬಿಟ್ಟರೆ ?

Oh! Krishna, I was thinking again & again that one-drop of ocean-like mercy is enough to put off the ferocious Kamafire, which is generated by the separation from you. But howmuchsoever I think, I am not getting even one drop of this. By whom the unlimited ocean of your mercy is completely drunk?

प्राणांस्त्यक्त्वा सुखमपि लभे मन्मथाग्निप्रतप्ता
दुःखं सोढुं प्रभवति हरे मानसं न प्रवीणम् ॥
मत्प्राप्त्यर्थं मम विरहतः प्राणमेषा मुमोचे-
त्येषा वार्ता श्रुतिपथगता यद्यहं स्यां कृतार्था ॥४१॥

**प्राणानिति** । मन्मथ एव अग्निस्तेन प्रतप्ता । अहमिति शेषः । प्राणान् त्यक्त्वा

अपि । सुखं लभे । डु लभष् प्राप्तौ लट् । हे हरे ! जीवित्वा दुःखं सोढुम् । मे इति शेषः । मानसं प्रवीणं समर्थम् । न प्रभवति । मम प्राप्त्यै इति । मम विरहतः । एषा रुक्मिणी । प्राणं ममोच तत्याज । मुच्लृ मोक्षणे लिट् । इत्येषा वार्ता । यदि । तवेति शेषः । श्रुत्योः पन्थानं गता । तर्हि अहं कृतार्था धन्या । स्याम् भवेयम् । एतावताऽपि अहं सन्तुष्टा भवामि इति भावः । ''जह्यामसून् व्रतकृशान् शतजन्मभिः स्यात् ॥'' इति भागवतस्थरुक्मिणीवचनार्थसङ्ग्रह इति ज्ञेयम् ॥ अत्र अनुज्ञा ।

ಓ ಹರಿಯೆ ! ಕಾಮಾಗ್ನಿಯಿಂದ ಬೆಂದು ಹೋದ ನಾನು ಪ್ರಾಣಬಿಟ್ಟಾದರೂ ನೆಮ್ಮದಿ ಪಡೆವೆ. ಈ ವಿರಹ ದುಃಖವನ್ನು ಸಹಿಸಲು ಮನಸ್ಸಿಗೆ ಶಕ್ತಿಯಿಲ್ಲ. ಓ ಒಡೆಯ ! ''ನನ್ನ ಮಿಲನಕ್ಕಾಗಿ ಹಾತೊರೆದು, ನನ್ನ ವಿರಹದಿಂದಲೇ ಈ ರುಕ್ಮಿಣಿಯು ಪ್ರಾಣಬಿಟ್ಟಳಂತೆ'' ಎಂಬ ಸುದ್ದಿಯಾದರೂ ನಿನ್ನ ಕಿವಿಗೆ ತಲುಪಿದರೆ ನಾ ಧನ್ಯೆ ಎಂದು ಭಾವಿಸುವೆ.

Oh! Sree Hare ! having burnt by the Kama-fire, I will get some relief, at least by loosing my life. But being alive, to bear with this much of sorrow, my mind is incapable. If the news "to have me and due to the separation from me this Rukmini lost her life" enters the path of your ears, I feel myself to be satisfied.

**दृग्भ्यामेषा सदयमतिथीकारिता यातना मे**
**यत्त्वत्प्रेमान्दुकनियमनक्षुब्धदीनान्तरायाः ॥**
**सर्वज्ञस्त्वं तव जठरगं विश्वमेतत्समस्तं**
**तद्दुर्लङ्घ्यं विधिविलसितान्नान्यदस्तीति मन्ये** ॥४२॥

**दृग्भ्यामिति** । हे कृष्ण ! त्वं सर्वज्ञः । एतत् समस्तं विश्वं तव जठरगं उदरगतम् । अथापि । यत् यतः । तव प्रेम एव अन्दुकः निगडः । ''अन्दुको निगडोऽस्त्री स्यात् ।'' इत्यमरः । तस्य नियमनं बन्धनम् । तेन क्षुब्धं क्षोभयुक्तं अन्तरं मनः यस्यास्तस्याः । मे मम । दृग्भ्यां नेत्राभ्याम् । एषा यातना । सदयं सकरुणम् । अतिथीकारिता अतिथिः इति विधापिता । तत् ततः । विधिविलसितात् दैवविलासात् अन्यत् दुर्लङ्घ्यं नास्ति इति मन्ये ऊहे । विधिविलसितमेव दुर्लघङ्घ्यम् अपरिहार्यम् । न

तदन्यदिति भावः । अथ वा तत् तादृशस्थितिः । विधिविलासात् दुर्लङ्घ्यं इति मन्ये । अन्यत् कारणं नास्ति । अत्र अर्थान्तरन्यासः । विशेषेण सामान्यसमर्थनात् । यातना अतिथीकरितेति पर्यायोक्तिः ।

ಓ ಶ್ರೀ ಕೃಷ್ಣ! ನೀನು ಸರ್ವಜ್ಞ. ಸರ್ವಸ್ವವೂ ನಿನ್ನ ಹೊಟ್ಟೆಯಲ್ಲೇ ಸೇರಿಕೊಂಡಿದೆಯಂತೆ. ಆದರೂ ಕೂಡ ನಿನ್ನ ಪ್ರೇಮಸಂಕೋಲೆಯ ಬಿಗಿತದಿಂದ ತಳಮಳಿಸಿ ಬಳಲಿದ ಹೃದಯವುಳ್ಳ ನನ್ನ ಕಣ್ಣಿಗೆ ಈ ನೋವು ನಿತ್ಯ ಅತಿಥಿಯಾಗೋದು ತಪ್ಪಲಿಲ್ಲ. ಆದ್ದರಿಂದ ಹಣೆಬರಹವನ್ನು ತಪ್ಪಿಸಲು ಯಾರಿಗೂ ಆಗದೆಂದೇ ತಿಳಿಯಬೇಕಾಗಿದೆ. ನನ್ನ ಸ್ಥಿತಿ ನಿನಗೆ ತಿಳಿದಿದ್ದರೂ ನೀನು ಕರುಣೆ ತೋರದಿದ್ದರೆ ಅದಕ್ಕೆ ಬೇರೆ ಯಾವುದೂ ಕಾರಣವಾಗಲಾರದಷ್ಟೆ

Oh! Krishna, my mind is purturbed and weakened by the bondage of cuff-like love with you. This pain is treated as a guest by my eyes (it means that she is crying). Though you know everything and the entire universe is in your stomach, if I am suffering like this, I think that it is only due to the play of my fate and is unavoidable and there can be no other reason.

**पादाम्भोजे कुसुममृदुले स्पर्शमात्रेण सौख्यं**
**लोकातीतं किमपि नितरां कुर्वती सन्निधाप्य ॥**
**अङ्के प्रेमोद्गलितनयनानन्दबाष्पाम्बुशीते**
**पाणिभ्यां ते कथय च कदा कृष्ण संवाहयामि** ॥४३॥

एवं कृष्णानुग्रहालाभे मनोगतं विचारं संवर्ण्य, कृष्णानुग्रहलाभे यन्मनोगतं तद्वर्णयति । **पादेत्यादिभिः सप्तपद्यैः** । हे कृष्ण ! कुसुमवत् मृदुले कोमले । केवलं स्पर्शेण । लोकं अतीतं । किमपि अपूर्वम् । सौख्यं सुखम् । नितरां अत्यन्तं । कुर्वती कुर्वाणे । ते तव । पादौ अम्भोज इव ते । प्रेम्णा उद्गलितं यत् नयनयोः आनन्दबाष्पस्य अम्बु जलं तेन शीते । अङ्के मम ऊरौ । सन्निधाप्य निक्षिप्य । पाणिभ्यां अहं कदा संवाहयामि ? वह प्रापणे णिचि लट् । हे कृष्ण ! कथय । कथ वाक्यप्रबन्धे लिट् । अत्र कदेत्यनेन व्यक्तः उत्साहः कृष्णरत्यङ्गमिति प्रेयोऽलङ्कारः ।

ಓ ಕೃಷ್ಣ! ಮುಟ್ಟಿದರೆ ಸಾಕು ಏನೊ ಒಂದು ಬಗೆಯ ಅಲೌಕಿಕ ಸುಖ ನೀಡಿ ಮೈ ನವಿರೇಳಿಸುವ

ಕುಸುಮಕೋಮಲವಾದ ನಿನ್ನ ಅಡಿದಾವರೆಗಳನ್ನು, ಪ್ರೇಮದಿಂದ ಉಕ್ಕಿಬರುವ ಆನಂದ ಬಾಷ್ಪಕ್ಕೆ ತಣ್ಣಗಾಗಿರುವ ನನ್ನ ಈ ತೊಡೆಯ ಮೇಲಿಟ್ಟುಕೊಂಡು ಕೈಯಿಂದ ಒತ್ತುವ ಭಾಗ್ಯ ನನಗೆಂದು ದೊರೆಯುತ್ತದೆ ? ಹೇಳು.

Oh! Krishna, just the touch of which gives supernatural, immense pleasure, when will my hands can softly press such flower-like soft lotus feet of yours, keeping on my lap which is cool and wet due to the tears of ecstasy overflowing out of love? Please tell me

**गाढाश्लेषोन्मथनविचलच्चूचुकाग्रस्तनोद्यत्-**
**रोमाञ्चाली कलयति कदा मानसे नन्दनालीम् ॥**
**या ते वक्षोविसरिपुलकासङ्गिनी बाहुपाशे**
**मन्दाक्रान्तां मम तनुलतां गाढबद्धां करोति** ॥४४॥

**गाढेत्यादि** । हे कृष्ण ! ते तव । वक्षसि विसरी प्रसरन् यः पुलकः रोमाञ्चः । तस्या आ अतिशयितः सङ्गः सम्बन्धः अस्या अस्तीति पुलकासङ्गिनी । या यादृशी मदीयरोमाञ्चाली । बाहुपाशे तव बाहुबन्धे । मन्दं आक्रान्ताम् । लज्जयेति भावः । मम तनुलतां गाढं बद्धाम् । करोति । सा तादृशी । गाढेन आश्लेषेण उन्मथनेन सङ्घर्षेण च विचलन्तौ चूचुकयोः स्तनाग्रयोः अग्रौ ययोस्तौ स्तनौ, तयोः उद्यन्ती रोमाञ्चानां आली समूहः । मानसे नन्दनालीं आनन्दवृन्दम् । कदा करोति । कथय इति पूर्वोक्तं योज्यम् ॥ अत्र मुद्रालङ्कारः । प्रेयोलङ्कारश्च ।

ಓ ದೇವ ! ಎಂದು, ಬಿಗಿದಪ್ಪಿ ಮೈ ತಿಕ್ಕಿ ಮೊಲೆ ತೊಟ್ಟುಗಳನ್ನು ನಡುಗಿಸುತ್ತ ಮೈನವಿರೇಳಿಸುವೆ ? ಮನಸ್ಸಿಗೆ ಸಂತಸದ ಅಲೆ ನೀಡುವೆ ? ನಿನ್ನ ಎದೆಯಲ್ಲಿ ನವಿರೆದ್ದ ರೋಮದೊಡನೆ ಬೆರೆತಾಗ, ನಿನ್ನ ತೋಳತೆಕ್ಕೆಯಲ್ಲಿ ಮೆಲ್ಲನೆ ಮುಂದಡಿಇಟ್ಟ ನನ್ನ ಮೈಬಳ್ಳಿ, ಆ ಆಲಿಂಗನದ ರೋಮಾಂಚನಕ್ಕೆ, ಬಿಗಿಯಾಗಿ ನಿನಗೆ ಬಿಗಿದುಕೊಳ್ಳುವುದು ಎಂದಾಗುತ್ತದೆ ?

Oh! Krishna, when the great enjoyment will be produced in my heart due to the thrilling of downs which are raising up on my breast, whose nipples are shivering due to the rubbing during the your tight embracement. While the happening of this, my

creeper-like body, which was slowly embracing earlier, will have got the tight binding in your shoulders due to the contact of my thrilled downs with the thrilled hair spread on your chest

**सीत्कारस्ते मदधररसास्वादनेषु प्रसक्तः**
**पीयूषस्याकलयति कदा कर्णयोः कृष्ण धाराः ॥**
**यो गोपीनां चिरतरमभूत् संस्मृतः कामतप्ते**
**मेघस्यैवारव इव तपे चातके धर्मतप्ते** ॥४५॥

**सीत्कार इति** । यः संस्मृतःसन् । कामेन तप्ते । गोपीनां मनसि । तपे ग्रीष्मर्तौ । ''उष्ण ऊष्मागमस्तप'' इत्यमरः । घर्मेण निदाघेन तप्ते । चातके । मेघस्य एव आरवः शब्द इव । समभूत् । तादृशः । मम अधररसस्य आस्वादनेषु । प्रसक्तः अत्यन्त-सक्तः । ते तव । सीत्कारः सीदित्याकारः शब्दः । कदा । कर्णयोः ममेति शेषः । पीयूषस्य धाराः । आकलयति पूरयति ? अत्र उपमा ।

ಓ ಕೃಷ್ಣ! ನನ್ನ ಕೆಳತುಟಿಯ ಸಿಹಿಯನ್ನು ಸವಿಯಲು ಮುಂದಾಗುತ್ತ ನಿನ್ನ ಸೀತ್ಕಾರನಾದವು ಎಂದು ನನ್ನ ಕಿವಿಗಳನ್ನು ಅಮೃತಧಾರೆಯಿಂದ ತುಂಬಿಸುತ್ತದೆ ? ಬೇಸಿಗೆಯ ಧಗೆಗೆ ಬೆಂದುಹೋದ ಚಾತಕಿಗೆ ಮೇಘದ ಗುಡುಗಿನಂತೆ, ನಿನ್ನ ಆ ಸೀತ್ಕಾರ ನಾದವು ಮಾತ್ರ, ಕಾಮದಿಂದ ಬೆಂದಿರುವ ಗೋಪಿಯರ ಹೃದಯಕ್ಕೆ ಬೇಕಾಗಿತ್ತಂತೆ. ಆ ನಾದ ನನಗೆಂದು ಕೇಳಿಸುತ್ತದೆ ?

Oh! Krishna, When my ears, will get the nectar-like enjoyment due to the noise of your sucking, which is interested in tasting of the nectar of my lower lip. This noise was being remembered by the Gopikas when their minds were burning by the lust, like a sound of the clouds being remembered by the Chakravaka bird that was burning during the summer.

**रक्तः प्रेम्णाधरमणिरयं निर्यतेवान्तरङ्गात्**
**हृद्यो दन्तक्षतविलसितो भूर्जपत्रत्वमेयात् ॥**
**यस्मिन् धात्रा लिखितशुभदा अष्टवर्गीयलेखा**
**अष्टौ लेखा स्युरिव लसिता रक्तबिम्बाधरे मे** ॥४६॥

**रक्त इति** । यस्मिन् मे रक्तबिम्बाधरे । धात्रा ब्रह्मणा । लिखिता शुभदाः । अष्टवर्गसम्बन्धिन्यः लेखा इव । अष्टौ लेखाः लसिताः स्युः । तादृशः । अन्तरङ्गात् हृदयात् । निर्यता निर्गच्छता । प्रेम्णा इव रक्तः अयं मे अधर एव मणिः । तव दन्तानां चतुर्णां चतुर्णां ऊर्ध्वाधस्थदन्तानां क्षतैः विलसितःसन् । हृद्यः सुन्दरः सन् । भूर्जवृक्षस्य पत्ररूपतां । कदा एयात् प्राप्नुयात् । इण् गतौ धातोः आङुपसर्गपूर्वकात् लिङ् । सुरतावसरे दन्तक्षतेन अधरे लेखास्स्युः । ताश्च अष्टौ लेखाः अष्टवर्गीयलेखा इव भासन्त इति भावः । अष्टवर्गस्तु अष्टरेकाविशिष्टः शुभाशुभसूचकश्चक्रविशेषः ज्योतिषशास्त्रप्रसिद्धो ज्ञेयः । अत्र उत्प्रेक्षा । रूपकादिसंश्लेषश्च ।

ಅಂತರಂಗದಿಂದ ಚಿಮ್ಮಿದ ಅನುರಾಗದ ಕಂಪಿಗೆ ಕೆಂಪಾದ ಈ ನನ್ನ ತುಟಿಯು, ನಿನ್ನ ಹಲ್ಲುಗಳ ಕಡಿತದಿಂದ ಕಳೆಗೂಡಿ ಕೆಂಪಾದ ಭೂರ್ಜದ ಎಲೆಯಂತೆ ಎಂದು ಆದೀತು ? ಆಗ ನಿನ್ನ ಹಲ್ಲೂರಿದಾಗ, ಈ ನನ್ನ ಕೆಂದುಟಿಯ ಮೇಲೆ ಮೂಡಿಬರುವ ಎಂಟು ಗೆರೆಗಳು ಬ್ರಹ್ಮ ಬರೆದ ಶುಭಸೂಚಕವಾದ ಅಷ್ಟವರ್ಗದ ಗೆರೆಯ ಹಾಗೆ ತೋರಬಹುದು. (ಭೂರ್ಜ ಗಿಡದ ಎಲೆಯ ಮೇಲೆ ಲೇಖನ ಮಾಡುವುದು ಹಿಂದಿನ ಕಾಲದ ಪದ್ಧತಿ. ಆ ಎಲೆ ಕೆಂಪಾಗಿರುತ್ತದೆ. ಅಷ್ಟವರ್ಗ ಎಂಬುದು ಜ್ಯೋತಿಷಶಾಸ್ತ್ರದಲ್ಲಿ ವರ್ಣಿತವಾದ ಎಂಟು ಗೆರೆಗಳ ಮಂಡಲ. ತುಟಿಯಲ್ಲಿ ಕೃಷ್ಣ ಹಲ್ಲೂರಿದಾಗ ಎಂಟು ಗೆರೆಗಳಾಗುವುದನ್ನು ಈ ಅಷ್ಟವರ್ಗಕ್ಕೆ ಹೋಲಿಸಿ ಬಣ್ಣಿಸಲಾಗಿದೆ.)

Oh! Krishna, when the bite will beautify my gemlike lower lip, which is reddened as if due to the love sprung from my heart, marks from your teeth. Then the eight marks imprinted on my lower lip will look like the eight lines of good fortune (Astavarga) written by Brahma, thinking my lip as a Birch leaf. (In ancient times, people used to write on Birch leaf and they were red in colour).

**नीवीबन्धश्लथनविगलच्चैलहृद्ये नितम्बे**
**हस्ताम्भोजाकलनकलया ह्रीभरादन्तरङ्गे ॥**
**तूष्णीं भावान्नमितवदनं पाणिनाकृष्य चुम्बं**
**चुम्बं चेतो रमयसि कदा कम्पमानाङ्गयष्टेः ॥४७॥**

**नीवीत्यादि** । नीव्याः कटिबन्धनवस्त्रस्य । बन्धस्य श्लथनेन विगलत् चेलम् । तेन

हृद्ये । नितम्बे कटिमण्डले । हस्तः अम्भोजमिव । तेन आकलनं स्पर्शग्रहणादि तस्य कलया । अन्तरङ्गे । ह्रीभरात् लज्जाभारात् । तूष्णीम्भावात् मौनात् । नमितं नम्रं वदनं मम मुखम् । पाणिना आकृष्य । समीपं कृत्वा उन्नमय्य वा । चुम्बं चुम्बं पुनः पुनः चुम्बित्वा । कम्पमाना अङ्गमेव यष्टिः यस्यास्तस्याः । ममेति शेषः । चेतः मनः । कदा रमयसि । रमु क्रीडायां णिचि लट् ? अत्र प्रेयोऽलङ्कारः । हस्ताम्भोजाकलनेति परिणामः ।

ನೆರಿಗೆಯ ಗಂಟು ಸಡಿಲಾಗಿ ಬಟ್ಟೆ ಜಾರುವಾಗ ಸುಂದರವಾಗಿ ಕಾಣುವ ನನ್ನ ಟೊಂಕದಲ್ಲಿ ನಿನ್ನ ಕರ ಕಮಲದ ಕೈ ಚಳಕಕ್ಕೆ ನಾನು ಒಳಗೊಳಗೇ ನಾಚಿ ಬಾಗುವುದೆಂದಾಗುತ್ತದೆ ? ಆಗ ಸುಮ್ಮನೆ ತಲೆ ಬಾಗಿಸಿದ ನನ್ನ ಮುಖವನ್ನು ಕೈಯಿಂದ ಮೇಲೆತ್ತಿ ಸೆಳೆದು ಮತ್ತೆ ಮತ್ತೆ ನೀ ಮುತ್ತುಕೊಡುವ ಸುಖ ಎಂದು ಸಿಗುತ್ತದೆ ? ಆ ಸುಖಕ್ಕೆ ಈ ನನ್ನ ಕೊಲ್ಲೈಯಲ್ಲಿ ಕಂಪನ ಎಂದು ಆರಂಭವಾಗುತ್ತದೆ ?

When will you delight me by kissing again & again by lifting my face with your hand? Then my face will be bent without a word and my body shivers due to the weight of shyness inside that is produced due to the naughty action of your lotus hand on the waist, which is beautiful by the slipping of the cloth because of the loosening of the frill knots.

**भ्रूकोदण्डे सरसविशिखान् लोचनान्तान्निमुञ्चन्**
**दुर्गस्थानं कुचशिखरिणं मन्मथस्यावपीड्य ॥**
**निर्गच्छन्तं कुपितमिव मन्मानसाद्बिम्बरक्तं**
**कामं जीया मदधरमलं मर्दयन् दन्तशस्त्रैः ॥४८॥**

**भ्रूकोदण्ड इति** । भ्रुवौ एव कोदण्डः धनुः तत्र । स्थितानिति शेषः । सरसाः विशिखाः बाणाः तान् । लोचनान्तान् कटाक्षान् । निमुञ्चन् । कुच एव शिखरी तम् । तत्सम्बन्धि इत्यर्थः । मन्मथस्य दुर्गस्थानम् । अवपीड्य सम्मर्दनं कृत्वा । मम मानसात् । कुपितं इव । निर्गच्छन्तम् । बिम्बफलवत् रक्तवर्णम् । मम अधररूपं कामम् । दन्ता एव शस्त्राणि तैः । अलं मर्दयन् सन् । त्वं जीयाः जयं प्राप्नुहि । जि जये लिङ् । अत्र रूपकोत्प्रेक्षासङ्करः ।

ಓ ಕೃಷ್ಣ! ನಿನ್ನ ಹುಬ್ಬಿನ ಬಿಲ್ಲಿನಲ್ಲಿ, ರಸಮಯವಾದ ಕುಡಿನೋಟವೆಂಬ ಬಾಣವಿಟ್ಟು, ನನ್ನ ಮೊಲೆಯೆಂಬ ಗಿರಿದುರ್ಗದಲ್ಲಿ ಅಡಗಿದ ಮನ್ಮಥನ ನೆಲೆಯನ್ನು ನಿನ್ನ ಕೈಗಳಿಂದ ಮರ್ದಿಸು. ಆಗ ಸಿಟ್ಟಾದ ಹಾಗೆ ಕೆಂಪಾಗಿ , ನನ್ನ ಹೃದಯದಿಂದ ಹೊರಗೆದ್ದು ಬಂದ ಹಾಗೆ ಕಾಣಿಸುವ ನನ್ನ ಕೆಂದುಟಿ ರೂಪದ ಆ ಮನ್ಮಥನನ್ನು, ನಿನ್ನ ಹಲ್ಲಿನ ಶಸ್ತ್ರಗಳಿಂದ ಈ ತುಟಿಯನ್ನು ಒತ್ತಿ ಚುಚ್ಚುತ್ತ ಗೆದ್ದು ಬಿಡು !

Releasing the arrows of sight with the help of the bow of eye-brows, by breaking the inaccessible fort of Manmatha who is located amidst hill-like breasts and will then come out from my heart in the form of my lower lip, as though he is very angry and red in colour like bimba fruit. You defeat him by crushing my lower lip with the weapon of your teeth.

**आश्लेषं मे वितरतु भवान् बाहुपाशावबद्धे**
**गाढं गात्रे हृदययुगलं श्लिष्टमस्त्वस्मदीयम् ॥**
**एषा पीना मम कुचतटी वक्षसस्ते भुजिष्या**
**येनैकोपि स्मरसुमशरो नावकाशं लभेत ॥४९॥**

**आश्लेषमिति ।** येन यादृशाश्लेषेण । एकः अपि । स्मरस्य सुमरूपः शरः । अवकाशं प्रवेशावकाशम् । न लभेत । डु लभष् प्राप्तौ लिङ् । तादृशम् । आश्लेषं भवान् मे वितरतु ददातु । वि इत्युपसर्गपूर्वकात् तॄ प्लवनतरणयोः लोट् । बाहू एव पाशौ ताभ्यां अवबद्धे । गात्रे शरीरे । अस्मदीयं हृदययुगलं गाढं श्लिष्टमस्तु । एषा पीना पुष्टा मम कुचतटी ते वक्षसः भुजिष्या दासी वर्तते । ''भुजिष्यपरिचारकाः'' इत्यमरः । अत्र रूपकम् ।

ಓ ಭಗವಂತ ! ಹೇಗೆ ಬಿಗಿದಪ್ಪಿದರೆ ಕಾಮಬಾಣವೆನಿಸಿದ ಒಂದು ಹೂ ದಳವೂ ಸಹ ನಮ್ಮಿಬ್ಬರ ನಡುವೆ ನುಸುಳಲಾಗದೋ ಹಾಗೇ ನೀ ಎನಗೆ ಆಲಿಂಗನವನ್ನು ಕರುಣಿಸು. ತೋಳತೆಕ್ಕೆಯಲ್ಲಿ ಬಿಗಿದುಕೊಂಡ ಮೈಯೊಳಗೆ ನಮ್ಮಿಬ್ಬರ ಈ ಎರಡೂ ಹೃದಯಗಳು ಗಾಢವಾಗಿ ಒಂದಾಗಲಿ. ಓ ಒಡೆಯ ! ನನ್ನ ಈ ದುಂಡಾದ ಉಬ್ಬಿದ ಮೊಲೆಯಂಗಳ ಎಂದೆಂದಿಗೂ ನಿನ್ನೆದೆಗೇ ದಾಸಿಯು.

Oh! Krishna, please grant me such an embrace of yours, by which even a single flower-arrow of Manmatha does not get a chance to enter our bodies. Let our two hearts get tightly united

in the mutual body, which are clasped by the cord like shoulder. My plump bosom is always the servant of your chest.

नित्यं ब्रह्मा कलयति यथा मानसे योगिवृन्दं
पङ्कक्रान्ते सरसि पतिता मानसं राजहंसी ॥
प्रेयांसं त्वां विगलितपरीवारबन्धुर्नितान्तं
ध्यायाम्यन्तोऽनिशमपि तथा कृष्ण मह्यं प्रसीद ॥५०॥

**नित्यमिति** । योगिनां वृन्दं समूहः । नित्यं मानसे । ब्रह्म परब्रह्म । यथा आकलयति ध्यायति । पङ्केन आक्रान्ते सरसि पतिता राजहंसी मानसं मानसनामकसरः । यथा आकलयति । तथा । प्रेयांसं त्वाम् । विगलिताः त्यक्ताः परीवारबन्धवः यया सा सती । नितान्तम् । अनिशं अपि । अन्तः हृदये । ध्यायामि । ध्यै चिन्तायां लट् । हे कृष्ण ! मह्यं प्रसीद प्रसन्नो वरदो भव । प्र उपसर्गपूर्वकात् षद्लृ विशरणगत्यवसादनेषु लोट् । भगवतः प्रसादप्राप्त्यर्थं योगित्वं आवश्यकमिति तद्दृष्टान्तः स्वीकृतः । एवं रुक्मिशिशुपालादीनां मध्ये स्थिताया स्वस्याः पङ्काक्रान्तराजहंसीसादृश्येन रुक्यादीनां पङ्कसादृश्यं निरूपितं भवति । अत्र उपमा ।

ನಿತ್ಯವೂ ಯೋಗಿಗಳು ಪರಬ್ರಹ್ಮನನ್ನು ಮನಸ್ಸಿನಲ್ಲಿ ಧ್ಯಾನಮಾಡುವಂತೆ, ಕೆಸರು ಕೊಚ್ಚೆಯಲ್ಲಿ ಬಿದ್ದು ಸಿಕ್ಕಿಕೊಂಡ ರಾಜಹಂಸಿಯು ಮಾನಸ ಸರೋವರವನ್ನು ನೆನೆಸುವಂತೆ, ನಾನೂ ಸಹ ಬಂಧುಗಳೆನ್ನೆಲ್ಲ ದೂರ ಮಾಡಿ ನಿತ್ಯವೂ ಹೃದಯದಲ್ಲಿ ನಿನ್ನನ್ನೇ ಧ್ಯಾನಿಸುತ್ತಿದ್ದೇನೆ. ಓ ಕೃಷ್ಣ! ನನಗೆ ಪ್ರಸನ್ನನಾಗು.

As ascetics always meditate Parabrahma in their mind; and as a female Flamingo, which has fallen into a polluted lake, thinks about "Manasa Lake"; similarly I am always meditating about you who are my lover, in my mind. Oh! Krishna, be propitious with me.

सम्प्राप्तुं मां मगधपतिना साकमागत्य चैद्यः
माङ्गल्याङ्कं कलयति महं स्वस्तिपुण्याहवाच्यम् ॥
माङ्गल्यात्प्राक् कुलसमुचिताचारदेव्यर्चनायै
वासस्थानाद्बहिरपगतां नन्दयालोकनेन ॥५१॥

प्रसीदेत्युक्तः प्रसादः कथं देय इति विचारे स्वस्वीकारक्रमं निरूपयति । **सम्प्राप्तुमिति** । चैद्यः शिशुपालः । मां सम्प्राप्तुम् । मगधपतिना जरासन्धेन । साकं सार्धम् । आगत्य । स्वस्तिपुण्याह इति वाच्यम् । माङ्गल्यस्य अङ्कं लक्षणभूतम् । महं उत्सवम् ''मह उद्धव उत्सव'' इति अमरः । कलयति करोति । माङ्गल्यात् प्राक् कुलस्य समुचितः य आचारः देव्या अर्चनारूपः तदर्थम् । वासस्थानात् अन्तःपुरात् । बहिः अपगतां मामिति शेषः । आलोकनेन कटाक्षेण नन्दय आनन्दय । टु नदि समृद्धौ णिचि लोट् । पूर्वेद्युरस्ति महती कुलदेवियात्रेत्यादि भागवतस्थरुक्मिणीवचनार्थसङ्ग्रह इति ज्ञेयम् ।।

ಓ ದೇವ ! ನನ್ನನ್ನು ಹೊತ್ತುಕೊಂಡು ಹೋಗಲು ಜರಾಸಂಧಾದಿಗಳಿಂದ ಕೂಡಿಕೊಂಡು ಶಿಶುಪಾಲ ಬರುತ್ತಾನಂತೆ. ಅದಕ್ಕಾಗಿ ಸ್ವಸ್ತಿಪುಣ್ಯಾಹ ಎಂಬ ಮಂಗಲ ಉತ್ಸವವನ್ನು ನಡೆಸುತ್ತಾನಂತೆ. ಆದರೆ, ಆ ಮಂಗಲ ಕಾರ್ಯಕ್ಕೆ ಮೊದಲು, ನಮ್ಮ ಕುಲಾಚಾರದಂತೆ, ಹಿಂದಿನ ದಿನ ಗಿರಿಜೆಯ ಪೂಜೆಗಾಗಿ ನಾನು ವಾಸಸ್ಥಳವಾದ ಅಂತಃಪುರದಿಂದ ಊರಿನ ಹೊರಗೆ ಬಂದಿರುತ್ತೇನೆ. ಅಲ್ಲಿ ನೀ ಬಂದು ದರ್ಶನ ನೀಡಿ ನನ್ನನ್ನು ಆನಂದ ಪಡಿಸು.

Shishupala, along with Jarasandha ,will come and perform a ritual called Swasthi Punyaha. Before this, as per the tradition of our family, for the worship of Devi Gowri, when I come out of the palace, you delight me by your sight.

**देवीं नत्वा बहिरभिगतां मन्दिरादुन्नताभ्यां**
**बाहुभ्यां त्वामभिमुखमलं प्रार्थयन्तीं सदैन्यम् ।।**
**चक्राद्यङ्काङ्कितनिजकराकर्षणेनाधिरोप्य**
**मामालिङ्गन् तुरगविलसत्स्यन्दने याहि नाथ** ।।५२।।

**देवीमिति** । हे नाथ । देवीं गिरिजाम् । नत्वा । मन्दिरात् देवालयात् । बहिः अभिगताम् । अभिमुखं पुरतः स्थितं त्वां उन्नताभ्यां कराभ्यां नत्वा । सदैन्यं अलं प्रार्थयन्तीं माम् । चक्रादिभिः अङ्कैः चिह्नैः अङ्कितेन निजकरेण आकर्षणेन । तुरगैः विलसति स्यन्दने । अधिरोप्य । मां आलिङ्गन् । याहि ।

ದೇವಿಗೆ ಪೂಜೆ ಸಲ್ಲಿಸಿ ಮಂದಿರದ ಹೊರಗೆ ಬಂದು ನಿಂತು ಎರಡೂ ಕೈಗಳನ್ನು ಮೇಲಕ್ಕೆತ್ತಿ

ಜೋಡಿಸಿ ನಿನ್ನೆದುರಿಗೆ ದೀನಳಾಗಿ ಪ್ರಾರ್ಥನೆ ಸಲ್ಲಿಸುವೆ. ಓ ಒಡೆಯ ! ಆಗ ನೀನು ಚಕ್ರಾದಿ ಚಿನ್ಹೆಗಳಿಂದ ಸುಂದರವಾದ ನಿನ್ನ ಕೈಯನ್ನು ಮುಂದೆ ಚಾಚಿ, ನನ್ನ ಕೈಹಿಡಿದು ಎಳೆದು, ನನ್ನನ್ನು ಸೆಳೆದು ಬಿಗಿದಪ್ಪಿಕೊಂಡು, ಕುದುರೆಗಳಿಂದ ಕೂಡಿದ ರಥದಲ್ಲಿ ವೇಗವಾಗಿ ಕರೆದುಕೊಂಡು ಹೋಗು.

Oh! my lord, when I come out of the temple after performing the worship of Parvathi-devi, and when I pray you with all humility by raising both the hands, standing face to face, then by pulling me with your hand which is having the marks of Chakra etc.,and by making me to ascend the chariot that is decorated with horses, hug me and take me away.

**नोचेदेवं कलयसि विभो त्वां सदा लोकमाना**
**स्वान्ते चिन्ताशतपरिवृता त्यक्तनिद्राशनादिः ॥**
**जह्यां प्राणान् सकरुणहृदं त्वां सदा वेदयन्ते**
**वेदाः प्राज्ञा न भवति भवान् निर्दयश्चेति मन्ये** ॥५३॥

एवं पत्रं विलिख्य सम्प्रार्थ्यापि यदि न कृष्ण आगच्छेत्तदा किं भवतीति निरूप्य, तथा न भवतीति विश्वासं च प्रकटयति । **नो चेदिति** । हे विभो ! एवं पूर्वोक्तरीत्या । नो कलयसि चेत् । तदा त्वां सदा लोकमाना निरीक्षमाणा । स्वान्ते मनसि । चिन्तानां शतेन परिवृता सती । त्यक्ताः निद्राशनादयः यया तादृशी सती । प्राणान् जह्याम् त्यजेयम् । ओ हाक् त्यागे लिङ् । परं तु तथा न भवेत् कुत इत्यत आह । **वेदा इति** । वेदाः प्राज्ञाः त्वां सकरुणहृदं सन्तं वेदयन्ते । अतः भवान् निर्दयः न भवतीति च मन्ये विश्वस्ता अस्मि ॥

ಓ ಪ್ರಭುವೆ ! ನೀ ಹೀಗೆ ಮಾಡದಿದ್ದರೆ, ನಾನು ನಿನ್ನನ್ನೇ ನಿರೀಕ್ಷಿಸುತ್ತ, ಮನದೊಳಗೆ ನೂರಾರು ಚಿಂತೆಯಿಂದ ಆವೃತಳಾಗಿ, ಊಟ – ನಿದ್ದೆ ಬಿಟ್ಟು ಪ್ರಾಣವನ್ನೇ ಬಿಡುತ್ತೇನೆ. ವೇದಗಳು ಹಾಗೆ ಜ್ಞಾನಿಗಳು ಯಾವಾಗಲೂ ನಿನ್ನನ್ನು ಕರುಣಾಳುವೆಂದೇ ತಿಳಿಸುವುದರಿಂದ ನೀನು ಅಷ್ಟು ನಿರ್ದಯನಾಗಲಾರೆ ಎಂದೂ ನಂಬಿರುತ್ತೇನೆ.

Oh! king, If you do not do this, frantically waiting for you and having hundreds of worries in my mind without food & sleep, I will give up my life. Both Vedas and learned people proclaim

that you are merciful hearted. Based on this I believe that you will not be pitiless.

**कोकीवार्कं प्रमुदितमनाश्चातकीवाब्दवृन्दं**
**रोलम्बाली सर इव पिकी मञ्जुला वा रसालम् ॥**
**कृष्ण द्रष्टुं सपुलकतनूरुत्सुकाहं नितान्तं**
**धन्यः को वा भवति दिवसो यत्र नौ सङ्गमस्स्यात्** ॥५४॥

स्वपत्रोपसंहारं कुरुते । **कोकीति** । कोकी चक्रवाकस्त्री । अर्कं सूर्यं इव । प्रमुदितं मनः यस्यास्सा चातकी अब्दानां मेघानां वृन्दमिव । रोलम्बानां भृङ्गानां आली समूहः। सर इव कासारमिव । मञ्जुला पिकी कोकिला । रसालं चूतकिसलयमिव । कृष्ण ! अहं त्वां द्रष्टुम् । नितान्तं पुलकेन रोमाञ्चेन सहिता तनूः यस्याः सा सती । उत्सुका उत्साहभरिता च । अस्मि । यत्र यस्मिन् दिने । नौ आवयोः । सङ्गमः स्यात् । स धन्यः दिवसः को वा भवति ? अत्र उपमा ।

ಚಕ್ರವಾಕ ಪಕ್ಷಿಗೆ ಸೂರ್ಯನಂತೆ, ಚಾತಕಿಗೆ ಮಳೆಮೋಡದಂತೆ ಜೇನುಮಾಲೆಗೆ ಸುಂದರ ಕಮಲಸರೋವರದಂತೆ, ಕೋಗಿಲೆಗೆ ವಸಂತ ಮಾವಿನ ಚಿಗುರಿನಂತೆ, ನನಗೆ ನೀನು ದರ್ಶನ ಮಾತ್ರದಿಂದ ಮೈನವಿರೇಳಿಸುವೆ. ನಿನ್ನ ದರ್ಶನಕ್ಕಾಗಿ ನಾನು ಬಹಳ ಉತ್ಸುಕಳಾಗಿದ್ದೇನೆ. ಓ ದೇವ ! ನಮ್ಮಿಬ್ಬರ ಮಿಲನ ಆಗುವ ಆ ಧನ್ಯ ದಿವಸ ಯಾವುದು ?

The way in which the female chakravaka birds look for the sun, the Chataka bird for clouds, the cluster bees for lotus-full lakes, the koils for mango-sprout, I am very anxious to see you with thrilled body. Which will be that auspicious day when we unite together? (The letter is completed).

**एषोऽर्थो मे लिखितकलितः पत्रिकायां निगूढः**
**ब्रह्मंस्तस्मै वितर हरये यो हरेन्मन्मथाधिम् ॥**
**वाग्मिन् वाक्यैः सरसमधुरैस्तस्य चेतो नितान्तं**
**मय्यासक्तं कलयितुमहं त्वां समर्थं विजाने** ॥५५॥

विप्रं प्रति रुक्मिणी वदति । **एष इति** । ब्रह्मन् ! एषः पूर्वोक्तः । निगूढः अर्थः

विषयः मे मम पत्रिकायां । लिखितः प्रतिपादितश्च । यः मे मन्मथाधिं कामव्यथाम् । हरेत् परिहरेत् । तस्मै हरये । वितर एतत् पत्रं प्रदिश । हे वाग्मिन् ! भाषणचतुर ! रससहितैः मधुरैः वाक्यैः तस्य कृष्णस्य । चेतः नितान्तं मयि आसक्तं कलयितुं त्वां समर्थं सन्तं अहं विजाने । ज्ञा अवबोधने लट् । अत्र हरये वितर यो हरेन्मन्मथाधिमिति निरुक्त्यलङ्कारः ।

ಓ ಬ್ರಾಹ್ಮಣ ! ಈ ರೀತಿಯಾಗಿ ರಹಸ್ಯವಿಷಯಗಳನ್ನು ಈ ಪತ್ರದಲ್ಲಿ ಬರೆದಿಟ್ಟಿದ್ದೇನೆ. ಮನ್ಮಥನಿಂದಾದ ಎನ್ನ ಮನೋರೋಗವನ್ನು ಪರಿಹರಿಸುವ ಆ ಶ್ರೀಹರಿಗೆ ಈ ಪತ್ರವನ್ನು ಸಮರ್ಪಿಸು. ಓ ಮಾತುಗಾರನೆ ! ಸರಸವಾಗಿ ಮಧುರವಾಗಿ ಮಾತಾಡಿ ಆ ಕೃಷ್ಣನ ಮನಸ್ಸು ನನ್ನಲ್ಲಿ ಆಸಕ್ತವಾಗುವಂತೆ ಮಾಡಲು ನೀನೆ ಸಮರ್ಥನೆಂದು ನಂಬಿದ್ದೇನೆ.

Oh! Brahmin! all this matter is written in this letter. Please hand over this letter to Sri Krishna who can provide remedy to my mental pains created by lust. Oh! Eloquent speaker! I believe that you are capable of creating interest in the mind of Sri Krishna about me by your sweet and interesting speech.

**भैष्म्यादेशं शिरसि निदधत् द्वारकामेत्य शीघ्रं**
**दृष्ट्वा कृष्णं प्रमुदितमनाः पत्रमस्मै च दत्वा ॥**
**प्रेमक्लिन्नः कपिकुलमणी राघवायेव सीता-**
**सन्देशोक्तीर्द्विजकुलमणिः सादरं व्याचचक्षे** ॥५६॥

एवं रुक्मिण्या प्रार्थितः विप्रः किं चकार ? कृष्णः आगतो वा ? इत्यादिशङ्कापरिहारकमुत्तरकथासन्दर्भं श्लोकद्वयेन प्रतिपादयति कविः । **भैष्म्यादेशमिति** । द्विजकुलमणिः । भैष्म्याः रुक्मिण्या आदेशं शिरसि निदधत् सन् । शीघ्रं द्वारकां एत्य । कृष्णं दृष्ट्वा । प्रमुदितं मनः यस्य तादृशः सन् । अस्मै कृष्णाय । पत्रं दत्वा । प्रेम्णा भक्तिविशेषेण क्लिन्नः आर्द्रः । कपिकुलमणिः हनुमान् । राघवाय रामाय । सीतायाः सन्देशस्य उक्तीः इव । रुक्मिणीसन्देशोक्तीः इति शेषः । सादरं व्याचचक्षे व्याख्यातवान् । वि आङ् इत्युपसर्गद्वयपूर्वकात् चक्षिङ् व्यक्तायां वाचि इति धातोः लिट् । अत्र उपमा ।

